ORISSA
the soul of India

उत्कलस्य पवित्रः देवः श्री जगन्नाथः । उत्कलम् 'ओरिस्सा'नाम्ना निर्दिश्यते अद्य । पूर्वं सः कलिङ्गनाम्ना निर्दिश्यते स्म । जगन्नाथस्य वैशिष्ट्यानि सन्ति बहूनि । अग्रजेन बलभद्रेण अनुजया सुभद्रया च स्थितः सः पूज्यते अत्र । एवं त्रयाणां पूजा अन्यत्र कुत्रापि नास्ति । एतेषां पूजासम्बद्धाः केचन आचाराः अपि अपूर्वाः एव ।



केषुचित् आचारेषु जगन्नाथः मानवत्वेन परिगण्यते । मानवः इव सः कदाचित् ज्वरग्रस्तः अपि भवति । आषाढमासस्य कृष्णे पक्षे (जूनमासे कदाचित्) तस्य दर्शनं न प्राप्यते जनैः । तदवसरे तस्य विशेषस्नानं यदा कार्यते तदा मूर्तेः वर्णस्य अपगमः यः भवति तस्य निवारणाय कलाकाराः वर्णेन अलङ्कुर्वन्ति जवनिकायाः पृष्ठतः ।

एते कलाकाराः जगन्नाथस्य अलङ्करणे निपुणाः । आदौ ते मूर्तेः आकारं केन्वास् वस्त्रस्य उपरि चित्रयन्ति । पारम्परिकक्रमानुगुणं काश्चन-'पट्ट'नामिकाः रचनाः अपि तत्र योजयन्ति । सुधाचूर्णेन, तिन्त्रिणीबीजेन, मण्डेन, निर्यासेन च कार्पसतन्तवः योज्यन्ते । तस्मात् सुखनम्यः दृढः श्वेतः पटः निर्मीयते । तदुपरि चित्राणि रच्यन्ते । तानि शोभावहानि चिरस्थायीनि च भवन्ति । तदुपरि चित्रितानि पट्टचित्राणि इति उच्यन्ते ।

एतस्य कार्यं कर्तुम् एव स्थिताः कलाकाराः देवालय-नगरीतः पुरीतः अनतिदूरे एव वसन्ति । तेषां वसतिभूतौ ग्रामौ – दण्डासाहि-रघुराजपुरनामकौ । एतयोः ग्रामयोः ये वसन्ति ते सर्वे प्रायः एतादृश्यां कलायां निपुणाः एव।

पट्टचित्राणां प्रशंसा समग्रे जगति क्रियते कलाप्रियैः ।

## प्रश्नाः

१. ओरिस्साराज्यस्य कस्मिन् नगरे भगवतः जगन्नाथस्य मन्दिरम् अस्ति ?

..............................................

२. जगन्नाथसम्बद्धस्य जनप्रियस्य उत्सवस्य नाम किम् ?

..............................................

३. जगन्नाथमन्दिरं केन राज्ञा निर्मितम् ?

..............................................

ऊनचतुर्दशवर्षीयाः बालाः एव अत्र भागग्रहणाय अर्हाः । अत्र दर्शिते रिक्ते स्थले उत्तरं लेखनीयम् । नामधामादि-विवरणं प्रपूर्य अधोनिर्दिष्टसङ्केताय एतत् स्पर्धापत्रं प्रेषणीयम् – **फेब्रवरी २८, २००३** तः पूर्वम्।

Orissa Tourism Quiz Contest - 3
Chandamama India Limited,
No.82, Defence Officers' Colony,
Ekkatuthangal, Chennai - 600 097.

नाम............................................ वयः ..............................

सङ्केतः ............................................ पिन् ..............................



*One winner picked by Orissa Tourism in each contest will be eligible for 3 days, 2-night stay at any of the OTDC Panthanivas, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism employees and their family members. The judges' decision will be final.*
*Orissa Tourism, Paryatan Bhaven, Bhubaneswar-751 014. Ph:(0674)2432177, Fax:(0674) 2430887, e-mail:ortour@sancharnet.in. Website:Orissa-tourism.com*



पुराणकथावली

२६



जगन्नाथकृतः सत्कारः
(वेतालकथा)

१९

मायासरोवरः - ११

१३



विघ्नेश्वरः - १४

४५



## अन्तरङ्गम्




SUBSCRIPTION

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of***
***Chandamama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384,
2347399
e-mail : advertisements@
chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-26515111/
26565513/26565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/
2661946/2653057



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# नद्यः घटयन्ति जनान्

भारते शतशः नद्यः सन्ति, याश्च पानकृष्यादीः आवश्यकताः पूरयन्ति । देशस्य पार्श्वद्वयतः यौ ऋतुवातौ समये वातः तत्कारणतः या वृष्टिः जायते तस्याः परिणामतः एतासु नदीषु जलसमृद्धिः भवति । एतत्सर्वं जानन्तः अपि वयं दौर्भाग्यवशात् वृष्टिकारणं निसर्गं स्वेच्छया नाशयन्तः आत्मघातं कुर्वन्तः स्मः । एतस्मात् नद्यः जलहीनाः जायमानाः सन्ति । अन्तर्जलस्तरश्च अधोधः गच्छन् अस्ति । अतः वयं जलाभाव-समस्याम् अनुभवन्तः स्मः । यस्य समीपे किञ्चित् अधिकं जलं दृश्यते तेन प्रतिवेशिना सह कलहं कुर्वन्तः स्मः अपि ।

केन्द्रसर्वकारः, यश्च एतां समस्याम् आ बहोः कालतः अनुभवति, एतस्याः समस्यायाः परिहारम् आनेतुं, राज्यानां परस्परकलहं निवारयितुं च प्रयतते । 'नदीनां सम्बन्धकल्पनतः सर्वत्र समानतया जलप्राप्तिः भवेत्' इति तस्य विचारः । अतः अग्रिमेषु १०-१५ वर्षेषु देशस्य त्रिंशन्नदीनां परस्परसम्बन्धः कल्पनीयः इति तेन योजना कृता अस्ति ।

भारतस्य जनाः वयं विश्वसिमः विविधेषु पूजामार्गेषु । भाषामहे विविधाभिः भाषाभिः । अनुसरामः विविधान् सम्प्रदायान् । तथापि अस्मासु समस्ति एव अखण्डता अक्षुण्णतया आ प्राचीनकालात् । भारतस्य प्रतिकोणं देशभक्तिः जागर्ति, या च मातृभूमेः रक्षणाय अस्मान् प्रवर्तयति । यदि प्रमुखनदीनां सम्बन्धः कल्प्येत तर्हि सा राष्ट्रियता इतोऽपि दृढा भवेत् । एतत् एव खलु वयं सर्वे इच्छामः ? वर्धतां सौहार्दभावः अस्मासु ।

---

सम्पादकः - विश्वम्
Visit us at : http://www.chandamama.org



# भिटर्कानिका

यदि भवन्तः जुगुप्साजनकात् जनसम्मर्दात्, बधिरीकुर्वतः शब्दतः च दूरे स्थिते स्थले विरामदिनानि यापयितुम् इच्छन्ति तर्हि अत्रास्ति तादृशं स्थलं भिटर्कानिकानामकम् ओरिस्साराज्यस्थम् । षट्शतचतुरस्रकिलोमीटरात्मकं प्रदेशम् अभिव्याप्य स्थितः भिटर्कानिकाप्रदेशः भारते वैशाल्येन द्वितीयं स्थानम् अर्हति, यत्र च तीरवृक्षसमूहः बाहुल्येन अस्ति । षष्ट्यधिकविधाः तीर-वृक्षाः द्रष्टुं शक्याः अत्र ।



भिटर्कानिका राष्ट्रियोद्यानं संरक्षितारण्यं च । अत्र १७० अधिकाः जीवजातयः वसन्ति । अन्येभ्यः प्रदेशेभ्यः आगन्तारः पक्षिणः अपि अत्र दृश्यन्ते बहुधा ।

भिटर्कानिकायाः त्रिषु पार्श्वेषु नदी अस्ति । चतुर्थे पार्श्वे अस्ति समुद्रः । अत्र बह्व्यः नदीधाराः कुल्याः च वहन्त्यः अन्ते बङ्गालसमुद्रेण मिलन्ति । तस्मात् द्वीपायमानाः अनेके भूभागाः सन्ति अत्र । वक्राकारिकां तीरभूमिं वहन्तः एते द्वीपाः नितरां रमणीयाः ।

'बङ्गालखातस्य क्रीडाङ्गणम्' इति ख्यातिः अस्ति भिटर्कानिकायाः । यदा समुद्रप्रवाहः उद्गच्छति तदा तीरवृक्षाः प्लवन्ते इव । यदा समुद्रप्रवाहः प्रतिगच्छति तदा अत्र तीरप्रदेशे विविधस्तरीयाः पङ्काः दृष्टिगोचराः भवन्ति, येषां च अन्तः वृश्चिकः, मीनाः, अन्ये समुद्रजीविनः च भवन्ति । एतस्य दृश्यस्य रामणीयकता शब्दैः वर्णयितुं न शक्या ।

एषः प्रदेशः आलिवूरैड्लेकूर्माणां नितरां प्रियः । ते वर्षे लक्षाधिकसङ्ख्यया अत्र आगत्य अण्डानि प्रसुवन्ति । भिटर्कानिका प्राप्तव्या चेत् जलमार्गः एकः एव शरणम् । एतं प्रदेशं प्रवेष्टुम् अनुमतिः प्राप्तव्या भवति । भाटकीयाः यन्त्रचालितनौकाः प्राप्यन्ते अत्र सञ्चाराय ।

## प्राप्तिमार्गः

भिटर्कानिका प्रवेष्टुं शक्या चन्दबालीतः (भुवनेश्वरतः १९० कि.मी.दूरे अस्ति एतत्) अथवा राजनगरतः (केन्द्रपाडातः ३०कि.मी.दूरे स्थितात्) गुप्तितः (राजनगरतः २५कि.मी.दूरे स्थितात्) वा अपि प्रवेशः भवितुम् अर्हति ।



# जन्तुषु दया

रामनगरं गङ्गनद्याः तीरे अस्ति । तस्मिन् ग्रामे धवलः नाम कश्चन शाकटिकः निवसति स्म । अश्वशकटचालनं तस्य वृत्तिः । तस्मिन् ग्रामे अश्वशकटः तस्य एकस्य एव । अतः धवलस्य महान् गर्वः । 'यदि जनाः साहाय्यम् इच्छेयुः तर्हि मत्समीपम् आगच्छेयुः एव' इति वदति स्म सः । गर्वकारणतः ग्रामाधिकारिणम् अपि उपेक्षया पश्यति स्म सः ।

ग्रामात् अनतिदूरे काचित् नदी प्रवहति । सर्वकारेण जलबन्धं कुल्यां च निर्माय राम-नगरस्य कृषिकाणां कृते जलं व्यवस्थापितम् । एतेन ग्रामे धान्यसमृद्धिः जाता । कृषिकाः धनवन्तः जाताः । अन्यग्रामेभ्यः अपि जनाः आगत्य अत्र वासम् आरब्धवन्तः । जनानाम् आवश्यकताः प्रवृद्धाः । एतस्मात् ग्रामे अन्ये त्रिचतुराः अपि अश्वशकटचालनम् आरब्ध-वन्तः ।

गर्वयुक्तस्य धवलस्य आयः एतेन न्यूनः जातः । जनाः यदा अन्यम् अश्वशकटम् आरोहन्ति तदा धवलः खेदम् अनुभवति स्म । कदाचित् आयाभावकारणतः तेन उपवासः अपि करणीयः भवति स्म ।

धवलस्य मनश्शान्तिः नष्टा । कदाचित् सः नद्याः तीरे स्थितं शिवमन्दिरं गतवान् । तत्समये अर्चकः भक्तान् वदति स्म - ''सर्वे सर्वेषां जीविनां विषये दयां प्रदर्शयेयुः । सर्वेषां विषये आदरः भवेत् । यत् क्रियते तत् श्रद्धया करणीयम् । परिश्रमपूर्वकं जीवनं यापनीयम् । एतस्मात् एव मानवस्य जीवनं सफलं भवितुम् अर्हति'' इति ।

धवलः एतानि वाक्यानि आसक्त्या श्रुत-वान् । अर्चकस्य उपदेशस्य श्रवणे तस्य कुतूहलम् उत्पन्नम् । सः श्रोतॄणां मध्ये उपविष्टवान् ।

अर्चकः स्वस्य बोधनम् अनुवर्तितवान् - ''मन्दिरम् आगताः भगवतः दर्शनं प्राप्य किमपि पुण्यकार्यं कुर्युः । यदि महत् पुण्यकार्यं

किमपि कर्तुं न शक्यते तर्हि पिपीलिकाभ्यः गुडं वा दद्युः । एतस्मात् अपि पुण्यं प्राप्यते । केचन वा जीविनः आहारं प्राप्नुवन्ति । एवमेव भोजनात् पूर्वं काकेभ्यः किञ्चित् अर्पयामः चेदपि पुण्यं प्राप्येत । ये जीविनः आहारं प्राप्तवन्तः भवन्ति ते अस्माकं हितं कामयन्ते । तस्मात् अस्माकं जीवने प्रगतिः भविष्यति । अतः जन्तूनां विषये दयाप्रदर्शनं सर्वेषां मानवानां कर्तव्यम्'' इति ।

अर्चकेन यत् उच्यते तत् युक्तम् इति अमन्यत धवलः । अतः सः आपणं गत्वा किञ्चित् गुडं क्रीत्वा शिवमन्दिरस्य सोपानेषु स्थापितवान् पिपीलिकानां निमित्तम् ।

अनन्तरक्षणे एव तेन कश्चन ध्वनिः श्रुतः - ''अये ! धवल ! क्षणं तिष्ठतु तावत्'' इति ।

ध्वनिं श्रुत्वा धवलः मुखं परिवर्त्य दृष्टवान् । ग्रामाधिकारी एव तम् आह्वयन् आसीत् । सः धवलम् अवदत् - ''योग्ये समये भवान् दृष्टः मया । मम पुत्रीं प्रतिवेशिग्रामं शिवपुरं प्रति अध्ययनाय प्रेषयितुम् इच्छामि । प्रतिदिनं भवता सा विद्यालयं प्रति नेतव्या । सायं प्रत्यानेतव्या च । एतदर्थं द्विशतं रूप्यकाणि दीयन्ते मया प्रतिमासम् । आ बहुभ्यः वर्षेभ्यः भवान् अश्वशकटं चालयति ग्रामे । अतः एतत् कार्यं भवते एव दातुम् इच्छामि । किम् एतत् अनुमतं भवतः ?'' इति ।

ग्रामाधिकारिणः एतानि वचनानि धवलम् आश्चर्यसागरे न्यमज्जयन् । एतादृशं प्रवर्तेत इति तेन सर्वथा न चिन्तितम् आसीत् । 'पिपीलिकाभ्यः अर्पितः गुडखण्डः, अहो एतावच्छीघ्रम् एव फलकारी जातः' इति चिन्तयन् सः गर्वभावं परित्यज्य ग्रामाधिकारिणम् अवदत् - ''यथाज्ञापयति भवान्'' इति ।

तस्मात् दिनात् सः पिपीलिकाभ्यः, काकेभ्यः, मार्गे अटद्भ्यः शुनकेभ्यः च आहारं दातुम् उद्युक्तः जातः । ग्रामीणाः धवलस्य एतां प्रवृत्तिं दृष्ट्वा आश्चर्यान्विताः जाताः । तैः एतदपि लक्षितं यत् धवले गर्वः नास्ति इदानीम् इति । अतः ते विविधानां कार्याणां निमित्तं तस्य शकटस्य साहाय्यस्वीकारे प्रवृत्तिं दर्शितवन्तः ।





# मायासरोवरः

## ११

*[जयशीलस्य मनसि भावना आगता यत् मायासरोवरं प्राप्तुं सर्पणखस्य साहाय्यम् अत्यावश्यकम् इति । सर्पणखः तु स्वस्य सहोदरस्य अन्वेषणस्य त्वरायाम् आसीत् । नरवानरस्य स्वामिनं कृपाणजितं दृष्ट्वा सः जलाश्वम् आरुह्य तस्य अनुसरणम् आरब्धवान् । मृत्युवृक्षस्य काचित् शाखा कृपाणजितम् अगृह्णात् । तदनन्तरम् ....]*

मृत्युवृक्षस्य एका शाखा कृपाणजितम् उदनयत् । तावता अपरा शाखा तस्य कण्ठभागम्, अन्या च शाखा तस्य पादभागं च अगृह्णात् । एवं कृपाणजित् सर्वभागेषु गृहीतः सन् कम्पितुम् अपि अशक्तः आसीत् । सः आत्मानं मोचयितुं विशेषप्रयत्नं कुर्वन् उच्चैः आक्रोशनम् अकरोत् – ''मां रक्षन्तु, रक्षन्तु माम्'' इति ।

वामनजातीयाः सर्वे तस्य आर्तनादं श्रुतवन्तः एव । किन्तु तेषु कोऽपि मृत्युवृक्षसमीपं न गतः । ते जानन्ति स्म यत् स्वसमीपम् आगतान् सर्वान् सः मृत्युवृक्षः गृह्णाति इति । जलाश्वः यथा न धावेत् तथा तस्य ग्रहणे उद्युक्ताः आसन् ते ।

जयशीलः सिद्धसाधकः च दूरात् एव एतत्सर्वं पश्यन्तौ आस्ताम् । तौ वेगेन अग्रे आगत्य धावन्तौ मृत्युवृक्षसमीपं गतवन्तौ । तावता जलाश्वम् आरूढः सर्पणखः अपि तत्र आगतः । ''मम भ्राता कुत्र इति अयम् एकः एव जानाति । अतः एषः कथमपि



रक्षणीयः एव अस्माभिः । एषः मरणं न प्राप्नुयात्'' इति वदन् अग्रे गत्वा स्वस्य खड्गेन वृक्षस्य एकां शाखां कर्तितवान् ।

एतस्मात् समग्रे मृत्युवृक्षे सकृत् कम्पनम् उत्पन्नम् । वेदनामिश्रितः ध्वनिः अपि कश्चन श्रुतः । अनन्तरक्षणे काचित् दीर्घा शाखा अवनता सती सर्पगत्या अग्रे सञ्चरन्ती सर्पणखं गले अगृह्णात् । एतस्मात् श्वासोच्छ्वासार्थं कष्टम् अनुभवन् सर्पणखः भीत्या उच्चैः अवदत् - ''हे मायासरोवरेश्वर ! रक्ष माम् । रक्ष माम्'' इति ।

जयशीलः सिद्धसाधकः च धावन्तौ सर्पणखसमीपं गतवन्तौ । सिद्धसाधकः सर्पणखस्य उभौ पादौ गृहीत्वा बलेन आकृष्टवान् । तावता जयशीलः सर्पणखस्य गलं गृहीतवतीं शाखां खड्गेन कर्तितवान् । पतन्तं सर्पणखं गृह्णन् सिद्धसाधकः अवदत् - ''अये मूर्ख ! अविवेकिन् ! भवतः एतत् दुस्साहसं, मायासरोवरं प्रति गमनाय विद्यमानम् एकमात्रं मार्गम् अपि अवरुद्धम् अकरिष्यत् । कदा किं करणीयम् इति किं भवान् न जानाति ?'' इति ।

सर्पणखः भूमौ सम्यक् तिष्ठन् अवदत् - ''मायासरोवरेश्वरः मम रक्षणम् अवश्यं करिष्यति इति अहं जानामि स्म । सः स्व-सेवकानां मरणं कथमपि न सहते'' इति ।

तदा सिद्धसाधकः क्रोधं प्रकटयन् पृष्टवान् - ''अये मूर्ख ! किं भवन्तम् इदानीं भवतः मायासरोवरेश्वरः रक्षितवान् ?'' इति ।

''मां सः प्रत्यक्षं रक्षितवान् न स्यात् । किन्तु भवतोः द्वारा सः मम रक्षणं कारितवान्'' इति वदन् सर्पणखः मुखम् उन्नीय मृत्युवृक्षं दृष्टवान् । वृक्षशाखायां लम्बमानं कृपाणजितं दृष्ट्वा सः - ''अहो ! एतस्य मरणकालः सन्निहितः । मम सहोदरः सर्पसखः कुत्र इति एषः एकः एव जानाति । अतः एतस्य रक्षणम् अवश्यं करणीयम्'' इति वदन् पुनरपि वृक्षसमीपं धावितवान् ।

तदा जयशीलः तं स्कन्धे गृहीत्वा तस्य गमनं निवारितवान् । ततः वामनजातीयान् उद्दिश्य उक्तवान् - ''भवतां सेनाध्यक्षः कुत्र ? एतस्य मानसिकी समस्थितिः विनष्टा अस्ति । अतः एतं नीत्वा जले मज्जयन्तु । तस्मात् एषः सम्यक् भवेत्'' इति ।

वामनजातीयाः यदा ग्रहीतुम् आगताः तदा सर्पणखः उच्चैः अवदत् - ''अहम् उन्मत्तः न । मम बुद्धिः न विनष्टा । सर्वान् अहं सम्यक् एव अभिजानामि । एते वामनकुलीयाः ।

भवन्तौ च जयशीलसिद्धसाधकौ । एषा मकरावतीनदी । सर्वम् अभिज्ञातुं शक्नोमि अहम्'' इति ।

''अये ! अलम् अधिकजल्पनेन । भवन्तं मकराणाम् आहारं करिष्यामः वयम्'' इति वदन्तः वामनजातीयाः तम् आकृष्य नदीदिशि नीतवन्तः । तावता रथारूढा वामनराज्ञी तत्र आगता । गडेकोण्डः तदनुयायिनः च करौ योजयित्वा स्थितवन्तः ।



राज्ञीं दृष्ट्वा जयशीलः अवदत् - ''यः स्वार्थस्य साधनार्थं भवतां मध्ये वैमनस्यम् उत्पादयितुं प्रयतते स्म तम् एषः मृत्युवृक्षः अखादत् यत् तत् उचितं जातम् । इतः परं भवन्तः निश्चिन्ततया जीवनं यापयितुम् अर्हन्ति । वयम् अपि स्वकार्यसाधनाय अभीष्टां दिशाम् अनुसरिष्यामः । वयम् इतः निर्गमनतः पूर्वम् एतं मृत्युवृक्षं ज्वालयितुम् इच्छामः । एषः वृक्षः बहून् जनान् अखादत् एतावता'' इति ।

''एवमेव भवतु । भवान् अस्माकं साहाय्यं कृतवान् यत् तदर्थं वयं कृतज्ञाः स्मः । नरवानरस्य स्वामी तु दिवङ्गतः, किन्तु सः नरवानरः अरण्ये अटति । अतः अस्माभिः सावधानैः भवितव्यम् । सः कदा अस्मान् पीडयेत् इति तु न ज्ञायते'' इति दीर्घं निश्श्वस्य उक्तवती राज्ञी ।

''एषः सर्पणखः असहायः अस्ति । एतस्य सहोदरं नरवानरः नीतवान् अस्ति । माया-सरोवरं प्रति गमनाय स्थितं मार्गं दर्शयितुं समर्थः एषः सर्पणखः एकः एव । अतः वयं भ्रातुः अन्वेषणे एतस्य साहाय्यं करवाम । एतदवसरे क्वचित् नरवानरः दृष्टः चेत् तं संहरिष्यामः अपि'' इति अवदत् जयशीलः ।

''किं तस्य मारणेन ? अहं तं स्वाधीनीकृत्य तदुपरि उपविश्य प्रयाणं कर्तुम् इच्छामि । तदस्तु तावत्, अग्निः कुत्र ? एतं वृक्षं दहाम वयम्'' इति अवदत् सिद्धसाधकः ।

त्रिचतुराः वामनजातीयाः अग्निदण्डान् गृहीत्वा अग्रे आगताः । सिद्धसाधकः तेषु एकं स्वीकृत्य - ''एतेन वृक्षेण बहवः मनुष्याः खादिताः सन्ति । अतः एतस्मिन् मांस-मज्जादीनाम् अंशाः अवश्यं स्युः । अग्निदण्डं वृक्षस्य उपरि क्षिपामि । अग्रे किं भवेत् इति पश्याम तावत्'' इति उक्त्वा अग्निदण्डं वृक्षम् उद्दिश्य क्षेप्तुम् उद्युक्तः ।

तावता - ''अये पापिन् ! अलं दुस्साहसेन । किम् एतं मृत्युवृक्षं दग्धुम् इष्यते भवता ? एतत् सर्वथा अशक्यम्'' इति वदन् कश्चित् आगतः ।



जयशीलः सिद्धसाधकः च मुखं परिवर्त्य दृष्टवन्तौ । तत्र कश्चन अरण्यवासी दृष्टः । अन्येभ्यः अरण्यवासिभ्यः उन्नतः आसीत् सः । तस्य कण्ठे पुष्पमाला आसीत् । स्कन्धे एकः परशुः अपि आसीत् । तस्य केशाः विकीर्णाः आसन् । सः धावन् सिद्धसाधक-समीपम् आगतवान् ।

सिद्धसाधकः तं लक्ष्यीकृत्य शूलं गृहीत्वा क्रोधेन अपृच्छत् – ''अये ! कः भवान् ? मां महाकालीभक्तम् अपि पापिनं कथयतः भवतः कियत् धाष्टर्यम् ?'' इति ।

सः आगन्तुकः निर्भयतया अवदत् – ''अहं चिरञ्जीविनः एतस्य मृत्युवृक्षस्य अर्चकः । मृत्युवृक्षे खड्गप्रयोगः यदा जातः तदा वेदना-युक्तः ध्वनिः श्रुतः खलु भवद्भिः ?'' इति ।

तदा जयशीलः किञ्चित् अग्रे आगत्य – ''वृक्षस्य पृष्ठतः निलीय तिष्ठन् भवान् एव तं वेदनामिश्रितध्वनिम् उत्पादितवान् खलु'' इति पृच्छन् तं गले गृहीतवान् ।

''आम् । अहम् एव तथा कृतवान् । तस्मिन् वृक्षे निवसन्ती मृत्युदेवी मां तथा आदिष्टवती अस्ति । अहं तस्याः सेवकः अस्मि, तस्याः पूजकः अस्मि'' इति उक्तवान् सः मृत्युवृक्षपूजकः ।

जयशीलः सिद्धसाधकं सकृत् दृष्टवान् । एतस्मात्, अग्रे किं करणीयम् इति अवगतवान् सिद्धसाधकः अर्चकस्य स्कन्धे स्थितं परशुं स्वीकृत्य – ''अये ! महाचतुर ! पूजक ! एषः मृत्युवृक्षः इतःपरम् अत्र न भविष्यति । वयं तं धक्ष्यामः । अतः इतःपरं भवतः पूजनादिकार्यं न भविष्यति । इतःपरं भवता एतं परशुं स्वीकृत्य अरण्यं गत्वा काष्ठानि छित्त्वा तेषां विक्रयणेन जीवनं यापनीयम् । निरापराधानां मुग्धजनानां प्राणानाम् अपहारकः एषः वृक्षः अचिरात् एव भस्मीभविष्यति'' इति उक्त्वा अग्निदण्डं वृक्षम् उद्दिश्य यदा क्षेप्तुम् उद्युक्तः तदा मृत्युवृक्षपूजकः तदीयं हस्तं गृहीतवान् ।

''अये दुष्ट ! महाकालस्य परमभक्तस्य मम हस्तः स्पृष्टः भवता ? रे, दूरे तिष्ठतु तावत्'' इति आदिश्य तम् अपसारितवान् ।

तदा सः मृत्युवृक्षपूजकः उच्चैः रुदन् – ''महात्मन् ! एषः वृक्षः दुष्टान् एव ग्रहीष्यति । सज्जनान् न स्पृशति कदापि । अतः एतस्मात् लोकस्य न कापि हानिः'' इति अवदत् ।

तदा जयशीलः मृत्युवृक्षपूजकं गृहीत्वा कठोरस्वरेण अपृच्छत् – ''भवता तु अधर्मः न आचरितः । पापं च न अनुष्ठितम् । जनाश्च न वञ्चिताः । एवं ननु ?'' इति ।



''तत्र कः सन्देहः ?'' इति अपृच्छत् मृत्युवृक्षपूजकः ।

जयशीलः प्रतिवचनं किमपि अदत्त्वा तं मृत्युवृक्षपूजकम् उन्नीय मृत्युवृक्षं प्रति क्षेप्तुम् उद्युक्तः । तदा सः मृत्युवृक्षपूजकः आक्रोशनं कुर्वन् महता दैन्येन अवदत् - ''महोदय ! महाशय ! मां मुञ्चतु कृपया । मां मृत्युमुखे मा पातयतु । मयि कृपां करोतु'' इति ।

''भवान् तु परमसज्जनः । एतादृशं भवन्तम् एषः मृत्युवृक्षः किमर्थं वा गृह्णीयात् ?'' इति हसन् उक्तवान् जयशीलः । सः पूजकः पुनरपि दैन्यं प्रदर्शयन् क्षमां प्रार्थितवान् ।

तदा जयशीलः तं भूमौ अवस्थाप्य सिद्धसाधकम् उद्दिश्य अवदत् - ''किं समयस्य व्यर्थीकरणेन ? मृत्युवृक्षे अग्निं योजयतु तावत्'' इति । सिद्धसाधकः अग्निदण्डं मृत्युवृक्षम् उद्दिश्य क्षिप्तवान् । अनन्तरक्षणे एव शाखासु अग्निः लग्नः । सर्वेषु पश्यत्सु सः वृक्षः भस्मसात् जातः ।

जयशीलः ज्वलन्तं कृपाणजितः शवं दर्शयन् अवदत् - ''एषः अमरावतीनगरे राज्ञः अश्वदलस्य प्रमुखः आसीत् । कदाचित् द्यूतसमये आवयोः मध्ये विवादः उत्पन्नः । विवादः तीव्रतां गतः । एतस्य परिणामतः मया अरण्यं शरणं गतम् । दुष्टाः कदापि सन्मरणं प्राप्तुं न अर्हन्ति । द्यूतगृहे देवशर्मनामकः मम सुहृत् अपि कश्चित् आसीत् । न जाने, इदानीं सः कुत्र कीदृश्यां स्थितौ अटन् अस्ति इति'' इति ।

''आवाभ्यां मायासरोवरं प्रति गन्तव्यम् अस्ति । हिरण्यपुरस्य राज्ञः अपत्ययोः अन्वेषणं करणीयम् अस्ति । एतदर्थं महान् समयः अपेक्षितः स्यादेव । एतदभ्यन्तरे भवतः सुहृत् कदाचित् प्राप्येत अपि'' इति अवदत् सिद्धसाधकः ।

''युक्तम् उक्तं भवता । ममापि भाति यत् सः कुत्रचित् मिलेत् एव इति । सः सर्पणखः कुत्र ?'' इति पृष्टवान् जयशीलः ।

सर्पणखः जलाश्वस्य उपरि उपविश्य दूरस्थं पर्वतं पश्यन् किमपि चिन्तयन् आसीत् । जयशीलः अपरं जलाश्वं दृष्ट्वा सिद्धसाधकम् अवदत् - ''एषः जलाश्वः किमर्थम् अस्माभिः न उपयोक्तव्यः ? आवयोः प्रयाणाय एषः उपयोगाय भवेत्'' इति ।

''जयशील ! एषः जलाश्वः भवदीयः एव भवतु । अहं पादाभ्यां भवन्तम् अनुसरिष्यामि । सः नरवानरः यदि मार्गे मिलेत् तर्हि तम् अहं मम वाहनं करिष्यामि'' इति

अवदत् सिद्धसाधकः ।

तदा जयशीलः अवदत् - ''नरवानरं भवान् स्ववाहनं कुर्यात् अपि । यथा रोचते तथा करोतु नाम । किं वयम् इतः गच्छाम इदानीम् ?'' इति उक्त्वा वामनराज्ञीम् उद्दिश्य अवदत् - ''भवत्याः प्रबलः शत्रुः कृपाणजित् तु नास्ति इदानीम् । अतः अत्र आवयोः आवश्यकता अपि नास्ति । सुखेन शान्त्या च निवसन्तु भवन्तः । आवां साधयावः तावत्'' इति ।

जयशीलः जलाश्वम् आरुह्य ततः प्रस्थितवान् । सिद्धसाधकः पादाभ्यां चलन् तम् अनुसृतवान् । सर्वे वामनजातीयाः जयकारं कृतवान्तः । एतं जयकारं श्रुत्वा सर्पणखः मुखं परिवर्तितवान् । तेन निर्गच्छन्तौ सिद्धसाधकजयशीलौ दृष्टौ ।

सः उच्चस्वरेण - ''भो भोः, मया मत्सहोदरः अन्वेष्टव्यः अस्ति । अतः भवद्भ्यां सह अहम् अपि आगमिष्यामि'' इति उक्त्वा स्वस्य अश्वं प्रेरयन् तौ अनुसृतवान् ।

जयशीलः तं सकृत् परीक्षादृष्ट्या दृष्ट्वा - ''नदीस्नानतः भवतः बुद्धिः सम्यक् जाता इति भासते । आत्मना यत् कर्तव्यं तत् करोतु । आवां तु मायासरोवरम् उद्दिश्य प्रस्थितौ स्वः । तत्र गत्वा तत्स्वामिनं खण्डशः कर्तयित्वा भूतेभ्यः बलिं दद्मः'' इति अवदत् ।

एतत् श्रुतवतः सर्पणखस्य मुखं विच्छायं जातम् । सः मौनम् आश्रितवान् । ततः ते त्रयः अपि अग्रे गच्छन्तः अर्धघण्टाभ्यन्तरे अरण्यस्य सीमाप्रदेशं प्राप्तवन्तः । इतः पूर्वं यस्मात् जलप्रपातात् सिद्धसाधकजयशीलौ निर्गतौ आस्तां सः प्रदेशः अपि तैः प्राप्तः ।

जयशीलः आत्मना प्राप्तम् अनुभवं सर्पणखं वक्तुं यावत् उद्युक्तः तावता सर्पणखः दूरस्थां पर्वतीयगुहां प्रदर्शयन् अवदत् - ''गुहायाः मुखे स्थित्वा कण्ठं बहिः प्रसार्य यः पश्यति सः नरवानरः एव खलु ?'' इति ।

''आम् । नरवानरः एव सः'' इति अवदत् जयशीलः । अनन्तरक्षणे एव घोरध्वनिम् उत्पादयन् सः नरवानरः गुहातः निर्गतवान् । मकरकेतोः वाहनभूतः जलगजः अपि तस्याः गुहातः बहिः आगतवान् । सः वेगेन पदानि स्थापयित्वा अग्रे गत्वा स्वशुण्डां प्रसार्य नरवानरं गृहीतवान् । - *(अनुवर्तते)*



# वेताल-कथा

## जगन्नाथकृतः सत्कारः

त्रिविक्रमः स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! मया बहुधा उक्तं चेदपि भवान् किमर्थम् एतं प्रयत्नं न त्यजति इति तु न ज्ञायते । किं मम वचनं पथ्यं न भवतः ? कीदृशं महाकार्यं साधयितुम् इच्छति भवान् ? तस्य साधनार्थं यः कार्याकार्य-विवेकः अपेक्षितः सः किं भवति अस्ति ? सः विवेकः सर्वसमभावः च केषुचित् आपाततः दृश्येरन्, किन्तु तेषाम् अन्तरङ्गं तु अन्यविधम् एव भवति । माधवशर्मा अत्र उदाहरणम् । भवतः मार्गायासस्य परिहारार्थं तस्य कथां श्रावयामि ।



श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

प्राचीनकालीना कथा एषा । रामपुरे जगन्नाथः नाम धनिकः निवसति स्म । तं सर्वे शिष्टं भावयन्ति स्म । सः सर्वेषु महान्तम् आदरं प्रदर्शयति स्म । बान्धवेषु यथा तथैव प्रीतिः प्रदर्श्यते स्म आगन्तुकेषु अपि । यदि कोऽपि प्रमुखः जनः रामपुरम् आगच्छति तर्हि सः जगन्नाथस्य गृहे एव वसति स्म ।

तस्मिन् एव ग्रामे रामचन्द्रः नाम अपरः अपि निवसति स्म । आ बाल्यात् रामचन्द्रः जगन्नाथः च सुहृदौ । किन्तु तयोः व्यवहारे तु महान् भेदः । यदि कोऽपि गृहं प्रति आगच्छति तर्हि यावत् आवश्यकं तावत् एव वार्तालापः रामचन्द्रस्य । कस्यापि विशेष-सत्कारं न करोति सः । तथापि बान्धवाः तु तस्य गृहं बहुधा आगच्छन्ति स्म । प्रायः तत् तस्य धनिकत्वं मनसि निधाय स्यात् ।

रामचन्द्रः सर्वेषां पुरतः वदति स्म - धनम् एव देवः इति । 'धनम् अस्ति चेदेव तिष्ठति अन्यत् सर्वम्' इति तस्य कथनम् । जनाः जगन्नाथं रामचन्द्रेण तोलयन्तः जगन्नाथस्य प्रशंसाम् आधिक्येन कुर्वन्ति स्म ।

कदाचित् महाकविः माधवशर्मा तं ग्रामं प्रति आगतः । माधवशर्मा, जगन्नाथः, राम-चन्द्रः च सहपाठिनः । तेषु माधवशर्मा एव महाबुद्धिमान् । जगन्नाथः रामचन्द्रः च गुरुणा बोधितम् अनवगच्छन्तौ माधवशर्मणः साहाय्यं स्वीकुरुतः स्म । माधवशर्मा यदा विवृणोति तदा एव तौ गुरुणा पाठितस्य अर्थम् अवगच्छतः स्म ।

एतद्विषये कदाचित् जगन्नाथः माधव-शर्माणम् उक्तवान् आसीत् - ''भवतः बोधनस्य अनन्तरम् एव आवां पास्य अर्थम् अवगच्छावः । अतः बोधनविषये भवान् गुरुम् अपि अतिशेते'' इति ।

''गुरुवर्यस्य पाठस्य श्रवणात् पूर्वं मया अपि एषः विषयः न अवगम्यते स्म । तस्य पाठनात् एव अहं नूतनान् विषयान् अवगच्छन् अस्मि । स तु महाज्ञानी । भवता अपि अवधानपूर्वकं यदि तस्य पाठः श्रूयेत तर्हि अर्थः अवगम्येत एव'' इति उत्तरं दत्तवान् आसीत् माधवशर्मा ।

तस्मिन् दिने जगन्नाथरामचन्द्रौ अवधान-पूर्वकं पाठस्य श्रवणाय महान्तं प्रयासं कृत-वन्तौ । तथापि पाठः न अवगतः । पुनः माधवशर्मणः साहाय्यम् एव शरणं जातम् ।

कदाचित् माधवशर्मा एतत्सर्वं गुरुम् उक्तवान् । तदा गुरुः हसन् अवदत् - ''गुरुणा पाठितम् अवगन्तुम् एकाग्रचित्तता नितराम् आवश्यकी । सा एकाग्रचित्तता भवतः अस्ति, न तु तयोः । ये एकाग्रचित्ततया गुरोः पाठं शृण्वन्ति ते एव ज्ञानिनः भवन्ति । अधीता विद्या तेषां जीवने उपकारिणी भवति । ते जीवने साफल्यम् अपि प्राप्नुवन्ति । मित्रतः प्राप्ता विद्या तु न शाश्वतफलदायिनी । अतः भवान् तौ वदतु यत् एकाग्रचित्ततानिमित्तम् इतोऽप्यधिकः प्रयासः करणीयः इति'' इति ।

यदा त्रयाणाम् अपि अध्ययनं समाप्तं तदा गुरुः त्रीन् अपि आशीर्वादेन अनुगृह्णन् उक्तवान् - ''माधवशर्मन् ! भवान् पण्डितः भविष्यति । राजाश्रयं प्राप्य श्रद्धया साहित्यसेवां करोतु । रामचन्द्र ! भवान् वाणिज्ये निपुणः । अतः वाणिज्ये सफलः भवतु भवान् । जगन्नाथ ! भवान् धनिककुले जातः । पूर्वजाः महतीं सम्पत्तिं दत्तवन्तः भवते । श्रेष्ठत्वं प्राप्तव्यम् इति महती इच्छा भवतः । अतः ये श्रेष्ठाः सन्ति तेषां सम्माननादिकं करोतु । स्वयं च सद्व्यवहारं करोतु'' इति ।

तदनन्तरं जगन्नाथः रामचन्द्रः च स्वग्रामं प्रत्यागतौ । माधवशर्मा राजाश्रयं प्राप्य प्रसिद्धः जातः । रामपुरस्य निमन्त्रणं पुरस्कृत्य सः रामपुरं प्रति आगतः ।

ग्रामाधिकारी तम् आदरेण स्वागतीकृत्य अवदत् - ''भवान् अस्माकं ग्रामं प्रति अतिथित्वेन आगतः । अहं तु ग्रामाधिकारी अस्मि । अतः भवतः वासादिव्यवस्था मम गृहे कल्पिता मया । यदि कोऽपि एतं ग्रामम् आगच्छति तर्हि सः जगन्नाथस्य गृहे तिष्ठति । जगन्नाथः तं विशेषतः सत्करोति । जगन्नाथस्य अतिथिसत्कारः सुप्रसिद्धः'' इति ।



तदा माधवशर्मा अवदत् - ''जगन्नाथः तु पूर्वं मम सहपाठी आसीत् । अतः तस्य गृहे वासः अपि वरम् एव स्यात्'' इति । ग्रामाधिकारी एतं प्रस्तावं सहर्षम् अङ्गीकुर्वन् एकं दूतं ग्रामाधिकारिणः गृहं प्रति प्रेषितवान् । ग्रामाधिकारी तस्य दूतस्य द्वारा वार्ता प्रेषितवान् यत् शीघ्रम् एव माधवशर्माणं मद्गृहं प्रति प्रेषयतु इति । माधवशर्मा शिष्येण कुशलेन सह जगन्नाथस्य गृहम् आगतवान् ।

जगन्नाथः माधवशर्माणम् आदरेण स्वागतीकृतवान् । द्वारे एव तम् आलिङ्ग्य कुशलप्रश्नान् पृष्टवान् । ततः वासभोजनादि-



निमित्तं विशेषव्यवस्था कृता तेन । तेन कृतां व्यवस्थां दृष्ट्वा कुशलः आश्चर्यचकितः जातः । अनन्तरदिने माधवशर्मा जनानां पुरतः कविताः श्रावितवान् । ताः श्रुत्वा जनाः सर्वे नितरां सन्तुष्टाः । सर्वे तस्य प्रशंसां कृतवन्तः । दिनद्वयानन्तरं भोजनोत्तरं माधवशर्मा रामचन्द्रविषयं पृष्टवान् ।

"सः सर्वदा वाणिज्यैकनिरतः भवति । वाणिज्यात् ऋते किमपि न जानाति सः । इदानीं सः ग्रामे नास्ति । वाणिज्यकार्यनिमित्तं कुत्रापि गतः सः द्वित्रदिनाभ्यन्तरे प्रत्यागमिष्यति" इति उक्तवान् जगन्नाथः ।

"एवं तर्हि गुरुवर्यस्य वचनम् अक्षरशः पालयन् अस्ति सः । भवान् अपि तथैव" इति उक्तवान् माधवशर्मा ।

तदा जगन्नाथः असन्तोषेण अवदत् - "रामचन्द्रः गुरोः वचनं यत् पालयति तत्र न किमपि आश्चर्यम् । वाणिज्यं कृत्वा धनं सम्पादयति सः । किन्तु मम कार्यं न तथा सुकरम् । कष्टकरं कार्यं मह्यं दत्तवान् अस्ति गुरुः । महतां सेवा न सुकरा । तेषां स्वागतार्थं मया अलङ्कृतः शकटः प्रेष्यते । विश्रान्तिभोजनादिनिमित्तम् विशेषव्यवस्था क्रियते । ग्रामदर्शनाय, समीपस्थानां स्थलानां दर्शनाय च ते नीयन्ते । एवम् आगतस्य एकैकस्यापि निमित्तं मया महान् परिश्रमः करणीयः भवति । अतः एव मम नाम ग्रामे इतरत्र चापि प्रसिद्धं जातम् अस्ति" इति ।

एवं तौ यदा वार्तालापं कुर्वन्तौ आस्तां तदा एव रामचन्द्रः तत्र आगतः । माधवशर्माणं दृष्ट्वा महान्तम् आनन्दं प्रदर्शयन् तं प्रीत्या आलिङ्ग्य - "ग्रामं प्रति आगमनसमनन्तरम् एव मया भवतः आगमनवार्ता ज्ञाता । अहं सर्वाणि कार्याणि परित्यज्य भवद्दर्शनार्थम् आगतः । आगच्छतु, मम गृहं गच्छाव" इति अवदत् ।

'श्वः प्रातः आगमिष्यामि' इति उक्तवान् माधवशर्मा । किन्तु रामचन्द्रेण तत् न अङ्गीकृतम् । 'इदानीम् एव आगन्तव्यम्' इति सानुरोधम् उक्तवान् सः । अतः अनन्यगतिकतया माधवशर्मा शिष्येण सह रामचन्द्रस्य गृहं गतवान् ।

रामचन्द्रः तत्र अवदत् - "मित्र ! भवान् महाकविः इति प्रसिद्धः । कृपया एकां कवितां श्रावयतु" इति ।

माधवशर्मा एकां कवितां श्रावितवान् ।

किन्तु रामचन्द्रेण तस्य तात्पर्यं न अवगतम् । अतः सः अवदत् - ''मित्र ! कविताः तु श्रवणरमणीयाः सन्ति । किन्तु तासां तात्पर्यं न अवगतं मया । अतः कृपया तात्पर्यं विशदीकरोतु'' इति ।

माधवशर्मा तस्य भावार्थं विवृतवान् । तदा रामचन्द्रः अवदत् - ''मित्र ! इदानीं सर्वम् अवगतं मया । भवतः काव्यम् उच्च-कोटिकम् । अहम् अल्पज्ञः वणिक् । अतः भवतः विवरणम् आवश्यकं जातम् । पूर्वम् अध्ययनकाले अपि गुरुणा बोधितं भवता विस्मियते स्म । तदैव मया बुध्यते स्म'' इति ।

रात्रौ शयनाय, अनन्तरदिने स्नानोपहारादि-निमित्तं वा रामचन्द्रस्य गृहे विशेषव्यवस्था तु कापि न आसीत् जगन्नाथस्य गृहे इव । दासी-दासादयः अपि न आसन् । भोजनम् अपि सामान्यम् एव । गृहजनाः यत् सेवन्ते तदेव आसीत् माधवशर्मणे तच्छिष्याय च ।

अनन्तरदिने जगन्नाथस्य सेवकः आगत्य निवेदितवान् - ''भवन्तौ वासाय स्वगृहं प्रति निमन्त्रयति अस्माकं स्वामी'' इति । कुशलः जगन्नाथस्य गृहं प्रति गमनाय समुत्सुकः आसीत् । किन्तु रामचन्द्रः माधवशर्माणम् अवदत् - ''माधव ! यावत् भवान् एतस्मिन् ग्रामे स्थास्यति तावत् भवतः वासः मम गृहे एव भवतु इति मम इच्छा'' इति ।

सः तं सेवकम् उक्तवान् - ''एषः इतोऽपि कानिचन दिनानि अत्रैव स्थास्यति'' इति ।

ततः द्वित्राणि दिनानि माधवशर्मा तत्रैव अवसत् । माधवशर्मा यदा स्वग्रामं गन्तुम् उद्युक्तः तदा रामचन्द्रः तस्मै वस्त्रादीनि उपायनरूपेण दातुम् उद्युक्तः । तदा माधवशर्मा निराकृतिं प्रदर्शितवान् ।

तदा रामचन्द्रः - ''यदा अहं भवतः गृहम् आगमिष्यामि तदा सवृद्धि स्वीकरिष्यामि । इदानीम् एतत् स्वीकरणीयम् एव'' इति



सानुरोधम् उक्त्वा सर्वं दत्तवान् ।

'सर्वत्र वाणिज्यबुद्धिरेव एतस्य' इति अचिन्तयत् कुशलः ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! समदृष्टिः स्यात् इति तु युक्तम् एव । किन्तु सर्वत्र समदृष्टिः भवितुं न अर्हति । माधवशर्मणः तु जगन्नाथः रामचन्द्रः च सुहृदौ । जगन्नाथः तं महता आदरेण सत्कृतवान् । रामचन्द्रः तु सामान्यं सत्कारं कृतवान् । जगन्नाथः श्रेष्ठानां सत्कारे प्रवृत्तिमान् । रामचन्द्रस्तु धनार्जनैकतत्परः । एवं स्थिते अपि माधवशर्मा रामचन्द्रस्य गृहे एव किमर्थं स्थितवान् ? रामचन्द्रः तस्य सेवायै न दासीदासान् नियोजितवान्, न भूरिभोजनं व्यवस्थापितवान् । जगन्नाथः तु तत्सर्वं कृतवान् । तथापि जगन्नाथगृहे वासविषये किमर्थम् अनासक्तिं दर्शितवान् माधवशर्मा ? किं सः जगन्नाथस्य प्रसिद्धिं श्रुत्वा असूयावान् जातः ? अथवा माधवशर्मणः पात्रापात्रनिर्णयसामर्थ्यं न्यूनम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''माधवशर्मा पात्रापात्रविवेचने दक्षः एव । व्यक्तेः योग्यता-निर्णये तस्य अपूर्वं सामर्थ्यम् । जगन्नाथः ईर्ष्यावान् । माधवशर्मणि यः आदरः दर्शितः सः अपि न हार्दः । माधवशर्मणः आगमनं जगन्नाथः जानाति स्म एव । तथापि ग्रामाधिकारी यदा सूचितवान् तदनन्तरम् एव सः माधवशर्माणं स्वगृहं प्रति निमन्त्रितवान् । न तेन स्वागताय शकटः प्रेषितः, न विशेष-स्थलानि दर्शितानि । रामचन्द्रः वाणिज्यैक-निरतः स्यान्नाम । तथापि सः माधवशर्मणि मैत्रीवान् । माधवशर्मणः आगमनं ज्ञात्वा सः सर्वाणि कार्याणि परित्यज्य धावन् आगतवान् । तेन माधवशर्मणः सेवायै दासाः न योजिताः । गृहजनाः एव तत् कृतवन्तः । रामचन्द्रस्य सर्वोऽपि व्यवहारः अकृत्रिमः । जगन्नाथस्य तु सर्वे व्यवहाराः कृत्रिमाः । प्रसिद्धिकामनया कृताः ते । यत् हार्दं भवति तत् अल्पं चेदपि कृत्रिमात् महत्तः श्रेष्ठम्'' इति ।

एवं त्रिविक्रमस्य मौनं भञ्जयितुं समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## कङ्कतम् अनुरागसूचकम्



कङ्कतानि केशप्रसाधनाय एव इति कः वदति ? वस्तुतः तु तत् अन्यस्मै महत्त्वपूर्णकार्याय अपि उपयुज्यते । ओरिस्साराज्ये जङ्गजातीयाः सन्ति । ते कङ्कतम् अनुरागस्य सङ्केतरूपेण अपि उपयुञ्जते । विवाहसमारम्भे अपि कङ्कतस्य विशिष्टं स्थानं भवति । साम्प्रदायिकपर्वदिने नृत्यावसरे जङ्गजातीयाः तरुणाः सहनर्तक्यै तरुण्यै कङ्कतं ददति । जङ्गजातीया तरुणी कस्मिंश्चित् अनुरागवती यदि भवति तर्हि सा तस्य तरुणस्य कङ्कतानि अपहरति । विवाहसमये वरः वध्वै कङ्कतम् उपायनी-करोति । तत् प्राप्य किं कुर्यात् सा इति ? सा तु तेन तस्य केशान् प्रसाधयति !

## वर्णप्रियः चक्रवर्ती

कः वर्णः भवतां प्रियः ? अग्रिमवारं यदा वर्णमयं किमपि चेतव्यं भवति तदा अकबराय ये प्रियाः आसन् ते अपि वर्णाः भवतां मनसि भवतु । 'एन्-ए-अकबरी' इत्येषः इतिहासग्रन्थः वदति – अकबरः स्वस्य वस्त्रपेटिकायां कीदृशानि वर्णमयवस्त्राणि स्थापयति स्म इति । माणिक्यवर्णः, सुवर्णवर्णः, नारङ्गवर्णः, पित्तलवर्णः तृणवर्णः, कार्पासवर्णः, पुष्पवर्णः, श्रीगन्धवर्णः, वातामवर्णः, द्राक्षावर्णः, मधुवर्णः, काश्मीरफलवर्णः, आम्रवर्णः, कस्तूरीवर्णः, कुङ्कुमवर्णः, सिन्धूरवर्णः, जम्बीरवर्णः इत्यादयः अनेके वर्णाः तस्य वस्त्राणाम् । नील-रक्त-श्वेत-पीतादयः वर्णाः तु आसन् एव । अहो, कीदृशी आसीत् तस्य राज्ञः वर्णप्रियता !



पुराणकथावली - १०

# अजेयः असुरः अन्धकः



राजकुमारी दितिः दक्षमहाराजस्य पुत्री । दक्षः हिमालयसमीपे स्थितं राज्यं पालयति स्म । दितिः कश्यपमहर्षिणा परिणीता जाता । तस्याः बहवः पुत्राः जाताः । ते दैत्याः इति कथ्यन्ते स्म । परस्परकलहः, देवानां विरोधः च तेषां प्रवृत्तिः । अतः ते सर्वे देवैः मारिताः अभवन् ।

एतस्मात् खिन्ना दितिः अरण्यं गत्वा एकान्ते घोरां तपस्यां कृतवती । देवाधिदेवं तपसा सन्तोष्य सा प्रार्थितवती यत् देवैः अपि यस्य संहारः कर्तुं न शक्येत तादृशं पुत्रं ददातु इति ।

तस्याः प्रार्थना देवाधिदेवेन अङ्गीकृता । अतः अग्रे तया कश्चन पुत्रः प्राप्तः, यश्च सहस्रपादः, सहस्रबाहुः, द्विसहस्रनेत्रः च आसीत् । यदा सः प्रवृद्धः तदा तदीयम् अनितरसाधारणं कौशलं सामर्थ्यं च लोकेन ज्ञातम् ।

शक्तिः बुद्धिमत्ता च लोके प्रशस्यते एव । तयोः उपयोगः यदि उन्नतलक्ष्यस्य साधनाय भवेत् तर्हि लोकस्य उपकारः अपि स्यात् । दीनदुःखितानाम् उद्धाराय अपि तयोः उपयोगः भवितुम् अर्हति । किन्तु दितेः पुत्रः तयोः उपयोगं परपीडनाय कृतवान् ।

स्वस्य शक्तेः विषये तस्य तु महान् दुरभिमानः आसीत् । अतः हितचिन्तकानाम् उपदेशम् अपि सः तिरस्कृतवान् । सर्वे तृणीकृताः तेन । ऋषिमुनयः तेन बहुधा पीडिताः । गर्वेण अन्धः आसीत् सः । गर्वान्धं तं जनाः 'अन्धकः' इति निर्दिशन्ति स्म ।

माता तम् अपरेण केनचित् मधुरेण नाम्ना निर्दिष्टवती स्यात्, तथापि स तु अन्धकः इत्येव ख्यातः जातः । तस्य वास्तविकं नाम केनापि न उपयुक्तम् ।

अन्धकः जानाति स्म यत् मम सहोदरान् देवाः एव नाशितवन्तः इति । अतः सः प्रतीकारसाधनं सङ्कल्पितवान् ।

अन्धकस्य देवगणस्य च घोरं युद्धं प्रवृत्तम् । तत्र अन्धकस्य एव जयः । तस्य मात्रा यः अपूर्वः वरः प्राप्तः आसीत् तस्य कारणतः कोऽपि देवः तं संहर्तुं शक्तः न जातः ।

अन्धकस्य पीडां परिहर्तुं कोऽपि उपायः आश्रयणीयः एव आसीत् देवैः । अस्त्रैः तस्य संहारः तु कथमपि न शक्यः । अतः अन्यः एव उपायः चिन्तनीयः आसीत् । एतत् कर्तुं सामर्थ्यम् आसीत् ब्रह्मणः, विष्णोः, शिवस्य च ।

अथ कदाचित् महर्षिः नारदः अन्धकेन मिलितः । नारदः एकाम् अपूर्वां मालां धृतवान् आसीत् । मालास्थानि पुष्पाणि रमणीयानि सुगन्धीनि च आसन् ।

तेषु लग्नां स्वदृष्टिं परावर्तयितुं न शक्तवान् अन्धकः । तेषां सौगन्ध्यं तस्मिन् मदम् अजनयत् । एतादृशानि पुष्पाणि तेन इतः पूर्वं न दृष्टानि आसन्, न वा श्रुतम् आसीत् तेषां विषये ।

अतः सः नारदम् अपृच्छत् – ''मुनिवर्य ! अपूर्वाणि सन्ति एतानि पुष्पाणि । एतानि कुतः प्राप्तानि भवता ?'' इति ।

''स्वर्गमर्त्यपातालेति त्रिषु लोकेषु ख्यातं



किञ्चिन स्थलम् अस्ति, यत्र एकत्र एव एतानि पुष्पाणि उपलभ्यन्ते । तस्य स्थलस्य नाम अस्ति मन्दरपर्वतः इति । अतः एतेषां पुष्पाणां नाम अस्ति मन्दारपुष्पम् इति'' इति अवदत् नारदः ।

''एतेषां पुष्पाणां माला मया अपि धर्तव्या इति मम महती इच्छा'' इति अवदत् अन्धकः ।

''एतां मालाम् अहं सन्तोषेण दद्याम् । किन्तु पश्यतु एतां मालाम् । कानिचन दिनानि एषा मया धृता इत्यतः अत्रत्यानि पुष्पाणि म्लानानि जातानि सन्ति । अन्यच्च अन्येन धृतायाः मालायाः धरणं राजाधिराजस्य भवतः न शोभेत अपि इति अहं चिन्तयामि'' इति अवदत् नारदः ।

''सत्यम् एतत् । भवता उक्तं पर्वतं प्रति मया गन्तव्यम् । एतेषां पुष्पाणां कारणतः सः

पर्वतप्रदेशः निश्चयेन परमाह्लादजनकः जातः स्यात् । ततः कानिचन पुष्पाणि अवचित्य मालां रचयित्वा धरिष्यमि अहम्'' इति अवदत् अन्धकः ।

नारदतः तं पर्वतं प्रति गमनाय मार्गं बोधितवान् । तत् ज्ञात्वा अन्धकः पर्वतं प्रति प्रस्थितवान् एव ।

पर्वतः यदा आसन्नः तदा एव मन्दारपुष्पाणां परिमलः तदीयं चित्तम् आकर्षत् । 'एतस्य प्रदेशस्य स्वामी अहम् एव' इति चिन्तयन् अन्धकः गर्वेण पदानि स्थापयन् पर्वतम् आरूढवान् ।

निसर्गनिर्मिते तस्मिन् पर्वतोद्याने विहरन्तौ उभौ दृष्टौ अन्धकेन । तौ दृष्टवतः तस्य मनसः स्थितिः झटिति परिवृत्ता । तस्य मनः क्रोधपूर्णं जातम् ।

'एषः प्रदेशः अन्यस्य भवितुम् अर्हति' इति ऊहाम् एव सोढुं न शक्तं तेन ।

अविवेकः तस्य मतिम् अनाशयत् । युक्तायुक्तविवेकं विना सः अग्रे प्रवृत्तः अभवत् ।

''कौ भवन्तौ ? अत्र किं कार्यं भवतोः ? राजाधिराजः अहम् अन्धकः आज्ञापये । भवद्भ्याम् इतः निर्गन्तव्यम् एतस्मिन् एव क्षणे । अन्यथा अहं भवन्तौ क्षणाभ्यन्तरे पर्वतमुले पातयिष्यामि, येन भवतोः अस्थिखण्डः अपि न प्राप्येत'' इति क्रोधेन अगर्जत् अन्धकः ।

तत्र स्थितौ जगतः मातापितरौ पार्वतीपरमेश्वरौ एव इति वराकः सः अन्धकः न जानाति स्म ।

शिवः तं सकृत् कटाक्षेण अपश्यत् । अन्धकः क्रोधेन कम्पते स्म । शिवः पार्वती च तस्य वचनं न पालितवन्तौ यत् तस्मात् तस्य क्रोधः प्रवृद्धः । सः स्वस्य करालदंष्ट्रां प्रदर्शयन् तौ ग्रहीतुं बाहून् सुदीर्घतया प्रसारितवान् ।

अनन्तरक्षणे एव शिवस्य त्रिशूलं तम् अघातयत् । तस्मात् पर्वतशिखरात् अधोमुखतया पतितः सः चूर्णीकृतः अभवत् । अन्धकः स्वस्य मरणं स्वयमेव स्वागतीकृतवान् आसीत् ।

एवं लोकः अन्धकस्य पीडातः मुक्तः जातः ।





# वृद्धायाः कथा

बहुपूर्वतनः कालः । एका वृद्धा महिला आसीत् । तस्याः एकः पौत्रः आसीत् । सा वृद्धा अत्यन्तं मुग्धा आसीत् । प्रतिवेशिन्यः महिलाः तस्याः मुग्धतायाः लाभं प्राप्नुवत्यः आसन् । जल्पनव्याजेन आगताः ताः गमन-समये तण्डुलदालादीन् तस्याः गृहतः नयन्ति स्म । तस्याः पौत्रः चन्द्रः । सः तस्याः सुखाकांक्षी आसीत् । अतः एव सः महता-परिश्रमेण धनार्जनं करोति स्म । परन्तु सः यत् अर्जयति तस्य महान् भागः वृद्धायाः मुग्धतायाः कारणतः नष्टः भवति स्म । एतस्मात् कारणात् चन्द्रः खिन्नः भवति स्म ।

एकस्मिन् दिने वृद्धा गृहे स्वच्छतां कुर्वती आसीत् । तदा तया एका लघ्वी कुञ्चिका प्राप्ता । 'एषा कुञ्चिका पौत्रस्य वस्त्रपेटिकायाः स्यात्' इति वृद्धा चिन्तितवती । अतः सा तया कुञ्चिकया पौत्रस्य पेटिकाम् उद्घाट्य दृष्टवती । तत्र वस्त्रैः सह एकः लघुस्यूतः आसीत् । यदा तत् उद्घाट्य दृष्टं तदा तत्र विंशतिः रूप्यकाणि, कानिचन नाणकानि च तया दृष्टानि ।

'अहो,! अहं यथा न जानीयां तथा एषः मम पौत्रः विंशत्यधिकरूप्यकाणि निगूहितवान् अस्ति खलु ?' इति स्वगतं वदन्ती वृद्धा सन्तोषातिरेकेण प्रतिवेशिनीभ्यः महिलाभ्यः धनं दर्शयितुं गृहात् धावितवती ।

सर्वाः यदा अस्मिन् विषये परस्परं सम्भाषमाणाः आसन् तदा तत्र द्वौ तरुणौ त्वरया आगत्य उक्तवन्तौ – ''चन्द्रस्य पितामही कुत्र अस्ति ? चन्द्रः नारिकेलवृक्षात् अधः पतितः अस्ति । शिरसि महाव्रणः जातः अस्ति । तं ग्रामप्रमुखस्य यानेन नगरं प्रति नीतवन्तः सन्ति । चन्द्रः उक्तवान् यत् तस्य पेटिकायां किञ्चित् धनं रक्षितम् अस्ति इति । पितामहीं दृष्ट्वा तत् स्वीकृत्य आगच्छन्तु इति अस्मान् सूचितवान् अस्ति'' इति ।

वृद्धा महता दुःखेन रोदनं कुर्वती धनस्य ग्रन्थिं ताभ्यां दत्तवती । तौ तत् धनं स्वीकृत्य गतवन्तौ । वृद्धा रुदती देहल्याः उपरि उपविष्टवती ।



ततः घण्टानन्तरं चन्द्रः शिरसा तण्डुलस्य गोणीं वहन् गृहम् आगतवान् । तं दृष्ट्वा वृद्धा सन्तोषातिरेकेण धावन्ती तस्य समीपं गत्वा – ''वत्स ! कथमस्ति वेदना ? वैद्यः किम् उक्तवान् ?'' इति पृष्टवती ।

क्षणकालं यावत् चन्द्रेण किमपि न अवगतम् । अनन्तरं तेन पितामहीमुखात् एव सर्वं ज्ञातम् । तदा सः खेदेन – ''मम समग्रं परिश्रमं भवती धूलिसात् कृतवती । मम महती आशा आसीत् यत् बहु धनसञ्चयः करणीयः, तस्मात् नगरे वाणिज्यं करणीयं, भवती च जीवने इतोऽप्यधिकं सुखम् अनुभवेत् इति । परन्तु भवत्याः ललाटे एतत् लिखितं नास्ति । अविवेकिनि ! इतः निर्गच्छतु भवती । इतः परं कदापि मम दृष्टिपथं न आगच्छतु'' इति आक्रोशनं कुर्वन् भोजनमपि अकृत्वा ततः गतवान् ।

पौत्रस्य तीक्ष्णवचनात् वृद्धायाः महान् खेदः जातः । 'एतादृशात् जीवनात् अपि घनारण्यं प्रविश्य पिशाचानां हस्तेभ्यः मरणप्राप्तिः एव वरम्' इति विचिन्त्य सा तस्मिन् अन्धकारे एव गृहात् निर्गत्य अरण्यं प्रविश्य एकस्य वटवृक्षस्य अधः उपविष्टवती । 'घोरान्धकारः अस्ति चेदपि एकः अपि पिशाचः न दृश्यते खलु ?' इति स्वगतम् उक्त्वा – ''पिशाचाः ! अयि पिशाचाः !!'' इति उच्चैः पिशाचान् आहूतवती ।

तदा उभौ लघुपिशाचौ तस्याः पुरतः उपस्थाय पृष्टवन्तौ – ''किमर्थम् आहूतम् ? किं कार्यम् अस्ति अस्मत्तः ?'' इति ।

तौ दृष्ट्वा सन्तुष्टा वृद्धा स्वस्य गृहे प्रवृत्तं निवेद्य – ''मम पौत्रः कटुवचनैः मां निन्दितवान् । इतः परं मम जीवनेन किम् ? मां मारयन्तु तावत्'' इति प्रार्थितवती ।

वृद्धायाः वचनं श्रुत्वा तौ पिशाचौ निर्वचनौ जातौ । तौ मन्दस्वरेण परस्परम् उक्तवन्तौ – ''एतस्याः वचनं श्रुतं चेत् भासते यत् कासारतीरे निवसतां चोराणां कार्यं स्यात् एतत् इति । ते काञ्चित् तरुणीं वञ्चनामार्गेण आनीतवन्तः सन्ति अपि । वराकी सा रोदिति असहायकतया'' इति ।

ततः तौ वृद्धाम् पृष्टवन्तौ – ''भवत्याः पौत्रस्य धनं दापितं चेत् किं भवती मरणविचारं परित्यज्य गृहं प्रतिगच्छेत् ?'' इति ।

तदा वृद्धा सन्तोषेण उक्तवती – ''धनं प्रतिप्राप्तं चेत् सन्तोषेण प्रतिगमिष्यामि'' इति ।

एतदनन्तरं तौ पिशाचौ वृद्धया सह कासार–

समीपं गतवन्तौ । यदा कुटीरः प्राप्तः तदा - ''भवती अत्रैव तिष्ठतु । कुटीरे किं प्रवर्तिष्यते इति परिशीलयतु तावत्'' इति उक्त्वा तौ कुटीरं प्रविष्टवन्तौ ।

अन्तः सुन्दरी तरुणी रुदती तरुणान् वदति स्म - ''मां मुञ्चन्तु कृपया । मम एतानि सर्वाणि आभरणानि स्वीकुर्वन्तु'' इति ।

तदा अट्टहासं प्रदर्शयन् कश्चित् अवदत् - ''तत् कथं शक्येत ? भवत्या अस्मासु कश्चित् परिणेतव्यः एव'' इति ।

अनन्तरक्षणे एव विलक्षणा घटना घटिता तत्र । या रुदती आसीत् सा तरुणी झटिति उत्थाय काली इव उग्ररूपं प्राप्य गर्जितवती । तस्याः नेत्रे रक्ते आस्ताम् । कोणस्थम् एकं दण्डं स्वीकृत्य तान् चोरान् ताडयन्ती सा - ''एतावत्पर्यन्तं मया दैन्येन प्रार्थना कृता । किन्तु मम वचनं न श्रुतं भवद्भिः । मां किं सामान्यां भावयन्ति भवन्तः ? अहं पिशाच-निवारकस्य प्रीतिपात्रपुत्री अस्मि । मम सामर्थ्यं कियत् इति पश्यन्तु तावत्'' इति उक्तवती ।

ते चोराः दण्डप्रहारजातां वेदनां सोढुम् अशक्नुवन्तः कुटीरात् बहिः गन्तुं प्रयत्नं कृतवन्तः । तदा द्वारसमीपे स्थितः अपरः पिशाचः तान् गृहीत्वा पुनः तरुण्याः समीपं नोदितवान् । तरुण्याम् आविष्टः अपरः पिशाचः तान् निर्दयं ताडितवान् । असहायाः ते चोराः भीत्या आक्रन्दनं कृतवन्तः ।

यस्यां पिशाचः आविष्टः आसीत् सा तरुणी वृद्धाम् अन्तः आहूय तां दर्शयन्ती चोरान् पृष्टवती - ''भवन्तः एव खलु वञ्चनया एतस्याः वृद्धायाः धनं चोरितवन्तः ?'' इति ।



''आम् । आम्'' इति उक्तवन्तः चोराः । ते भीत्या कम्पमानाः आसन् ।

''अहो, कीदृशाः नीचाः भवन्तः ? एतां निष्कपटां वृद्धां वञ्चयित्वा, एतस्याः पौत्रेण महता श्रमेण सम्पाद्य सञ्चितं धनं चोरितवन्तः खलु भवन्तः ! किं लज्जा न भवति भवताम् ? झटिति एतस्याः धनं प्रत्यर्पयन्तु तावत्'' इति आदिष्टवान् तरुण्यां स्थितः पिशाचः ।

चोराः विना वचनं वृद्धायै धनं प्रत्यर्पित-वन्तः । तदा पिशाचः पुनः अवदत् - ''भवन्तः चोरवृत्तौ नूतनाः । अतः दण्डप्रहार-मात्रं प्राप्तं भवद्भिः । अन्यथा भवन्तः खादिताः स्युः अस्माभिः । निर्गच्छन्तु इतः । इतः परं परिश्रमं कृत्वा जीवनीयं भवद्भिः'' इति ।

चोराः झटिति ततः धावितवन्तः । अनन्तरं

तौ पिशाचौ नैजं रूपं प्राप्य तत्र प्रत्यक्षौ जातौ । तौ दृष्ट्वा तरुणी भीता जाता । पिशाचौ मधुरैः वचनैः तस्याः सान्त्वनं कृतवन्तौ । वृद्धया पृष्टा सा तरुणी स्वकथाम् उक्तवती – ''मम नाम लक्ष्मीः इति । विमाता मां बहुधा पीडयति स्म । तत्रत्यं कष्टं सोढुम् अशक्नुवती अहं मन्मातृसम्बद्धानि आभरणानि, किञ्चित् धनं च स्वीकृत्य ततः पलायितवती । मध्येमार्गम् एते चोराः मां गृहीतवन्तः'' इति ।

पिशाचौ वृद्धायाः कथां लक्ष्मीं श्रावयित्वा उक्तवन्तौ – ''भवती सुन्दरी सुशीला च अस्ति । भवती एतस्याः वृद्धायाः पौत्रं चन्द्रं यदि परिणयेत् तर्हि वरं स्यात् इति अस्माकं विचारः । आर्ये ! किम् एतत् सम्मतं भवत्याः ?'' इति ।

पिशाचयोः वचनं श्रुत्वा नितरां सन्तुष्टा वृद्धा उक्तवती – ''किम् अत्र सम्मतिविषये प्रश्नेन ? मम अन्तरङ्गे स्थितम् एव भवन्तौ उक्तवन्तौ'' इति ।

अत्रान्तरे चन्द्रस्य आह्वानं दूरतः श्रुतम् – ''अम्ब ! अयि अम्ब !'' इति ।

तदा वृद्धा लक्ष्म्याः हस्तं गृहीत्वा कुटीरात् बहिः आगत्य उच्चस्वरेण अवदत् – ''वत्स ! एषाहम् अत्र अस्मि'' इति ।

चन्द्रः वृद्धायाः समीपम् आगत्य रोदनमिश्रितेन स्वरेण – ''अम्ब ! धनं नष्टम् इत्यतः क्रोधवशात् मया यत्किञ्चित् उक्तं स्यात् । तत्कारणात् एव भवती गृहं त्यक्त्वा आगता । भवतीं विना कथम् अहं जीवेयम् ?'' इति अवदत् ।

तदा वृद्धा हसन्ती – ''भवतः धनं न कुत्रापि गतं वत्स ! पश्यतु, भवदर्थं सुन्दरीम् एतां पत्नीत्वेन स्वीकृत्य एव प्रत्यागतं तेन धनेन'' इति उक्त्वा लक्ष्मीम् अग्रे आकृष्य दर्शितवती ।

लक्ष्म्याः सौन्दर्यातिशयं दृष्ट्वा चन्द्रः आश्चर्येण स्तब्धः । चन्द्रं दृष्ट्वा लक्ष्मीः लज्जया शिरः अधः कृतवती । तौ दृष्ट्वा पिशाचौ – ''अनुरूपं युगलम् एतत् । कल्याणमस्तु'' इति उक्त्वा ततः अदृश्यौ जातौ ।

ततः सप्ताहाभ्यन्तरे लक्ष्मीचन्द्रयोः विवाहः मन्दिरे यथाविधि सम्पन्नः । पत्न्या दत्तेन धनेन चन्द्रः वाणिज्यम् आरब्धवान् । प्रभूतं धनम् अपि सम्पादितं तेन । तौ वृद्धां प्रीत्या पश्यतः स्म । अतः वृद्धायाः जीवनं सुखमयं जातम् ।





## परिणता टिया

पञ्चवर्षीया लण्डन्नगरीया टिया लावेन् राबर्ट्स् कदाचिदपि 'स्टाक् एक्सचेञ्ज्'भवनं न प्रविष्टवती, तथापि अंशपत्राणां(शेर्स्) विषये पूर्वसूचनादाने समर्था सा । यस्मिन् दिने प्रमुखसंस्थानाम् अंशपत्राणि १६% मूल्यह्रासं प्राप्तवन्ति आसन् तस्मिन् एव दिने सा ५.८% लाभं सम्पादितवती आसीत् । यतः मूल्यस्य वृद्धिं ह्रासं वा सा सम्यक् ऊहितवती भवति । तस्मिन् एव दिने सुप्रसिद्धः अंशपत्रवाणिज्य-परिणतः ४८% हानिम् अनुभूतवान् । भविष्यवक्ता कश्चित् ६.२% हानिम् अन्वभवत् । अग्रिमेषु षट्सु सप्ताहेषु वित्तवर्षस्य समाप्तिकाले ब्ल्यू चिप्स्, क्याड्बरी स्क्यापस्, प्रोडेन्शीयल्, पीयरसन् इत्यादीनाम् अंशपात्राणां मूल्ये वृद्धिः स्यात् इति वदति सा ।

---

## वरम् अरण्यं, न तु नगरजीवनम्



जन्तनबहारी (१६ वर्षीयः) विद्यालय-गमनं, नगरप्रदेशे वासं वा सर्वथा न इच्छति । आकर्षकान् प्रोचकान् स्वीकृत्य गतान् अधिकारिणः सः अवदत् यत् अरण्यवासः एव मम प्रियः इति । मलेशियादेशे टेमोक्-प्रदेशे अत्यल्पजनयुक्तायां जातौ जातः सः । ''अरण्ये एव मम रुचिः । नगरजीवनं सर्वथा न रोचते मह्यम्'' इति दृढनिश्चयसूचकेन स्वरेण वदति सः । पहाङ्ग्राज्ये अरण्ये नवभिः गृहसदस्यैः सह काष्ठमये कुटीरे वसति सः । ''अरण्यं मह्यम् अन्तश्शान्तिं ददाति । अत्रत्या वृष्टिबहुलता उत्तेजनकारिणी अस्ति । मम पुत्रस्य जीवनं मरणं वापि अत्रैव स्यात्'' इति वदति तदीयः पिता बहारकूपी ।



# जन्मजातः स्वभावः

रामः भीमः च प्रतिवेशिनौ । रामः तु धनिकः । भीमः अपि निर्धनः न । तथापि तस्य महती सम्पत्तिः न आसीत् । एवं स्थिते अपि ग्रामस्य जनाः तु भीमस्य उपकार-प्रवृत्तेः महतीं प्रशंसां कुर्वन्ति स्म ।

भीमस्य प्रशंसां श्रुत्वा रामः असूयया उत्पतति । सः कदाचित् निश्चितवान् यत् जनानां प्रशंसां प्राप्तुं मया अपि यत्किञ्चित् करणीयम् एव इति । अतः सः दानम् अपेक्ष्य गृहम् आगतवद्भ्यः प्रभूतं धनं दत्तवान् । ग्रामस्य मन्दिराय अपि प्रभूतं धनं दत्तवान् । तथापि ग्रामस्य जनाः तु भीमम् एव प्रशंसन्ति स्म, न तु रामम् । जनाः यदा भीमस्य औदार्यस्य प्रशंसां कुर्वन्ति तदा रामस्य मनः मुकुलितं भवति स्म ।

कदाचित् बन्धुः गोविन्दः रामस्य गृहम् आगतवान् । रामः स्वस्य मनसि स्थितं खेदं तं निवेदितवान् ।

तदा गोविन्दः उक्तवान् - ''एतत् प्रचार-युगम् । अल्पस्य अपि उपकारस्य महान् प्रचारः स्यात् । उपकारं प्राप्तवन्तः जनाः यदा भवतः प्रशंसां कुर्वन्ति तदा भवता ख्यातिः प्राप्यते । अचिरात् एव प्रमोदः नाम कश्चित् एतं ग्रामम् आगमिष्यति । यदि भवान् तम् आदरेण पश्येत् तर्हि भवतः महान् लाभः भवेत्'' इति ।

''प्रमोदः तन्त्रशास्त्रस्य अध्ययनाय एतं ग्रामम् आगन्तुम् इच्छति । महातन्त्रितः सः तन्त्रशास्त्रम् अध्येष्यते । यावत् शास्त्राध्ययनं क्रियते तावत् स्वयं पाकः क्रियते तेन । कस्यापि गृहस्य अन्तः वासः न क्रियते । गृहात् बहिः एव शयनं क्रियते । भूमौ तृणकटे वा शयनम् । शुष्ककाष्ठानि सङ्गृह्य वृक्षस्य अधः पाकः क्रियते । गृहस्वामी कोऽपि यदि अङ्गीकारं

ददाति तर्हि एव तेन गृहस्य पुरतः शयनं क्रियते । अन्यथा मन्दिरे जीर्णगृहे वा तदीयः वासः स्यात् । एते नियमाः विना लोपं पाल्यन्ते प्रमोदेन'' इति विवृतवान् गोविन्दः ।

'एतत् तु अल्पं साहाय्यम् । एतस्मात् ग्रामे मम कीर्तिः वर्धेत । सर्वे मम औदार्यस्य प्रशंसां निश्चयेन कुर्युः' इति अचिन्तयत् रामः ।

अतः सः गोविन्दम् अवदत् - ''प्रमोदं मम गृहं प्रति एव प्रेषयतु । अहं तस्य साहाय्यं करिष्यामि'' इति ।

'अस्तु' इति उक्त्वा गोविन्दः यदर्थम् आगतम् आसीत् तत् कार्यं समाप्य स्वग्रामं प्रतिगतवान् ।

ततः दिनद्वयाभ्यन्तरे प्रमोदः रामस्य गृहम् आगत्य अवदत् - ''महोदय ! भवतः ख्यातिः बहुधा श्रुता मया । भवतः गृहस्य पुरतः वासाय अनुमतिः दत्ता यत् तत् तु महते सन्तोषाय । मम विद्याभ्यासाय महान् उपकारः कृतः भवता'' इति ।

प्रमोदः उषसि एव उत्तिष्ठति स्म । नद्यां स्नात्वा नदीतीरस्थेषु वृक्षेषु स्थितानि फलानि अवचित्य खादति स्म । मध्याह्नपर्यन्तं महातन्त्रिणः गृहे अध्ययनम् । मध्याह्ने नदीतटे एव पाकः क्रियते स्म । भोजनानन्तरं महातन्त्रिणः गृहे स्थितान् ग्रन्थान् दृष्ट्वा मुख्यभूतान् अंशान् ताडपत्रे लिखति स्म । रात्रौ फलानि एव भोजनं तस्य । भोजनानन्तरं ताडपत्रेषु स्थितान् अंशान् पठित्वा तेषां मननं कृत्वा शयनं करोति स्म सः ।

तस्मिन् ग्रामे सर्वेऽपि स्वगृहस्य पुरतः दीपं स्थापयन्ति स्म । प्रमोदः तस्य दीपस्य प्रकाशे



ताडपत्राणि पठति स्म । पठनसमये आगतान् सन्देहान् अनन्तरदिने गुरुं पृष्ट्वा निवारयति स्म ।

एवमेव कानिचन दिनानि अतीतानि । रामः अचिन्तयत् यत् प्रमोदस्य महत् साहाय्यं क्रियमाणम् अस्ति मया इति । तस्य गृहस्य सदस्यानां मनसि अपि अयम् एव भावः उत्पन्नः ।

प्रमोदविषये रामस्य असन्तोषः - 'मया एतावान् उपकारः कृतः चेदपि अयं मम प्रशंसां न करोति' इति । रामस्य पत्नी चिन्तयति स्म - 'मम गृहस्य पुरोभागे एव वसन् अपि एषः मयि आदरं, मम साहाय्यं वा न करोति' इति । रामस्य पुत्रादीनां कोपः - 'प्रमोदः अस्मान् कथादिकं न वदति' इति ।

रामः कदाचित् प्रमोदम् एतत्सर्वम्



उक्तवान् । तदा प्रमोदः खेदं प्रकटयन् - ''अध्ययनैकदृष्टिमता मया एते अंशाः न लक्षिताः एव । अहं क्षन्तव्यः । अद्यैव मम व्यवहारम् अहं परिष्करोमि । सर्वान् तोषयितुं प्रयासं करिष्यामि'' इति ।

तस्मात् एव दिनात् प्रमोदः गृहजनैः सह वार्तालापादिकं कर्तुं कञ्चित् कालं व्ययितवान् । एतदनन्तरं पञ्चसु दिनेषु प्रमोदस्य कार्यभारः प्रवृद्धः । रामः तम् अटनादिकार्याणि वदति स्म । तत्पत्नी वस्तूनाम् आनयनकार्यम् अर्पयति स्म । पुत्राः च विहारक्रीडादिनिमित्तं तं सानुरोधम् आह्वयन्ति स्म ।

प्रमोदस्य मनसि विचारः आगतः यत् एवमेव अहं कार्येषु व्यापृतः भवामि चेत् मम अध्ययनं न प्रचलिष्यति इति । अतः सः यदा कोऽपि कार्यं वदति तदा स्पष्टशब्दैः वदति स्म यत् मम समयः नास्ति इति ।

एतस्मात् निराकरणप्रदर्शनात् खिन्नः रामः अवदत् - ''भोः, सर्वे स्वगृहस्य पुरतः सामान्यं दीपं स्थापयन्ति । अहं तु भवतः अध्ययनस्य आनुकूल्याय बृहन्तं दीपं स्थापितवान् अस्मि । तस्य उपयोगः क्रियते भवता एव । अतः तस्य दीपस्य निमित्तम् उपयुज्यमानस्य तैलस्य निमित्तं यः व्ययः क्रियते सः भवता एव निर्वोढव्यः'' इति ।

तदा रामः अवदत् - ''अहं मितव्ययपुरस्सरम् अध्ययनं कुर्वन् अस्मि । यदि तैलार्थं धनं दीयते तर्हि आहारार्थं क्रियमाणे व्यये न्यूनता करणीया भवेत् । आहारे न्यूनता भवति चेत् शरीरं दुर्बलं भवेत् । ततः अध्ययनं कुण्ठितं स्यात् । अतः तैलार्थं धनं दातुं मम सामर्थ्यं नास्ति'' इति ।

एतत् श्रुत्वा रामः कुपितः । अतः सः गृहस्य पुरतः दीपस्य स्थापनं स्थगितवान् । तस्मात् प्रमोदः भीमस्य गृहस्य पुरतः स्थाप्यमानस्य दीपस्य प्रकाशे पठनम् आरब्धवान् ।

एतत् ज्ञात्वा रामः भीमम् उक्तवान् - ''गृहस्य पुरतः दीपः स्थापनीयः इति परम्परा केन किमर्थम् आरब्धा इति तु न ज्ञायते । तस्य दीपस्य उपयोगं स्वीकुर्वन्तः जनाः अल्पां कृतज्ञताम् अपि न प्रकटयन्ति । गृहस्य पुरतः वितर्दिकायां वासाय अनुमतिः दत्ता चेदपि उपकारः न कृतः एव इति भाव्यते कैश्चित् । तैलस्य व्ययः दातव्यः इति मया प्रमोदः सूचितः । अतः सः भवतः गृहस्य पुरतः उपविश्य पठति । मम गृहस्य पुरतः वासः, भवतः गृहस्य पुरतः पठनम् । भवान् अपि

स्वगृहस्य पुरतः दीपं मा स्थापयतु । तदा तस्य गर्वः अपगच्छेत् । अध्ययनरतस्य एतादृशः अहङ्कारः न उचितः'' इति ।

तदा भीमः अवदत् – ''सः मम गृहस्य पुरतः उपविश्य पठति इति अहं न जानामि स्म । भवतु, अद्यैव बृहतः दीपस्य स्थापनस्य व्यवस्थां करिष्यामि'' इति ।

''रे ! किं तस्य निमित्तम् अधिकः तैल-व्ययः क्रियते भवता ?'' इति अपृच्छत् रामः ।

''भगवता एतस्मिन् वर्षे तिलानां समृद्धिः कल्पिता अस्ति । गृहे अपि नास्ति मम दारिद्र्यम् । अल्पेन उपकारेण मम किं छिन्नम् भवेत् ? भवान् किं किं कष्टम् अनुभवति इति न जाने ? अहं तु कष्टेभ्यः मुक्तः अस्मि । अतः प्रमोदः अद्य आरभ्य मम गृहस्य पुरतः एव वसतु अपि'' इति अवदत् भीमः ।

एतत् श्रुतवतः रामस्य कोपः आगतः । तथापि सः मौनेन अतिष्ठत् । 'द्वित्रेषु दिनेषु एव एषः प्रमोदस्य व्यवहारतः असन्तोषं प्राप्य तं प्रेषयेत्' इति सः अचिन्तयत् । किन्तु तथा तु न जातम् । भीमः न केवलं बृहन्तं दीपं स्थापितवान्, अपि तु तालपत्रनिर्मितं व्यजनम् अपि तस्मै दत्तवान् । भीमस्य पुत्राः वस्त्वानयनादिविषये तस्य साहाय्यं कुर्वन्ति स्म । शुष्ककाष्ठस्य सङ्ग्रहणे अपि ते साहाय्यं कुर्वन्ति स्म । एतस्मात् विशेषकष्टं विना प्रमोदस्य अध्ययनं निर्विघ्नतया परिसमाप्तम् ।

अध्ययनसमाप्तेः अनन्तरं सः भीमस्य प्रशंसां बहुधा कृतवान् । तस्य उदारतां बहुधा प्रशंसितवान् । एतस्मात् ग्रामे भीमस्य ख्यातिः इतोऽपि प्रवृद्धा ।

तत्समये एव गोविन्दः पुनरपि रामस्य ग्रामम् आगतवान् । तदा रामः तम् अवदत् – ''प्रमोदं मद्गृहं प्रति प्रेषयन् भवान् प्रसिद्धिप्राप्त्यर्थं कञ्चित् अवसरं दत्तवान् आसीत् । किन्तु मया तस्य उपयोगं स्वीकर्तुं किमर्थं न शक्तम् इति न ज्ञायते'' इति ।

तदा गोविन्दः हसन् उक्तवान् – ''अन्यस्य उत्कर्षस्य दर्शनात् अस्मासु ईर्ष्या उत्पद्यते । धर्मोपकारादयः यदि अस्मासु सहजतया स्युः तर्हि एव वयम् ईर्ष्यां जेतुं शक्नुयाम । भीमे परोपकारगुणः सहजः, न तु भवति । अतः एव प्रमोदस्य विषये एवं जातम्'' इति ।



# राजस्थानीया जानपदकथा

धीराः राजानः, दीर्घकण्ठाः उष्ट्राः, शुष्का मरुभूमिः, महन्ति दुर्गाणि, वीर्यवन्तः जनाः इत्यादयः यदा अस्माकं स्मरणपथम् आगच्छन्ति तदा वयं राजस्थानं स्मरामः । एतस्मिन् राज्ये अपूर्वा प्रकृतिसम्पत्तिः दृश्यते । अत्र अरावलीश्रेणी, या च अतिपुरातनी पर्वतश्रेणी इति ख्याता, थार्मरुभूमिः, या च उपखण्डे विद्यमाना अद्वितीया मरुभूमिः इति श्रूयते इत्यादयः सन्ति ।

राज्ञाम् आश्रयस्थानम् इति कथ्यमानम् एतत् राजस्थानं १९ संस्थानानां, त्रयाणां सेनास्थानानां च संयोजनेन १९५६ तमे वर्षे निर्मितम् । एतस्य राज्यस्य विस्तारः प्रायः ३४२, २३९ कि.मी.परिमितः अस्ति ।

राजस्थानं परितः मध्यप्रदेशः, उत्तर-प्रदेशः, गुजरात्, पञ्जाब, हरियाणा इत्येतानि राज्यानि वर्तन्ते । पाकिस्थानसीमा अपि इतः निकटे एव वर्तते ।

एतस्य राज्यस्य जनसङ्ख्या तावत् ५६,४७३,१२२ । एतस्य राजधानी जयपुरम् । हिन्दी एतस्य राज्यभाषा । राजस्थानीभाषा आङ्गलभाषा चापि अत्र उपयुज्येते । मर्वारि, मेवारि, हदोति, मेवाति इत्यादयः हिन्दीभाषाप्रभेदाः अपि अत्र उपयुज्यन्ते ।

## सुयोग्या सुता

वृद्धः ठाकूरः हरिसिङ्घः यदा रुग्णः जातः तदा सः ज्ञातवान् यत् द्वित्रेषु दिनेषु एव अहम् इहलोकं त्यजन् अस्ति इति । अतः सः समीपस्थान् कुटुम्बजनान् आहूतवान् । तस्य एका एव सुन्दरी सुता लालरदा तस्य हस्तं गृहीत्वा पार्श्वे स्थितवती ।

तस्य बान्धवाः अवदन् - ''ठाकूरवर्य ! भवतः अन्तिमम् आशयं कथयतु । वयं पूरयिष्यामः '' इति ।

हरिसिङ्घः उक्तवान् - ''मम इच्छाः सर्वाः मया एव पूरिताः सन्ति । परन्तु आशाद्वयं



तथैव अवशिष्टम् अस्ति'' इति ।

''ते के ? कथ्यतां तात'' इति अवदत् लालरदा ।

''पुत्रि ! 'तोदर्माल्' मम गृहे श्रूयेत इति मम अपेक्षा'' इति उक्तवान् हरिसिङ्गः ।

'तोदर्माल्' नाम जानपदविवाहगीतम् । यदा पुत्रः वधूम् आनेष्यति तदा महिलाः एतत् गायन्ति । हरिसिङ्गः तु पुत्ररहितः । तर्हि कथं वा तोदर्माल् गृहे श्रूयेत ?

किञ्चित्समयानन्तरम् एकः उक्तवान् - ''दत्तकपुत्रः यदि भवता स्वीक्रियेत तर्हि एतत् साध्यं भविष्यति'' इति ।

परन्तु हरिसिङ्गः निश्श्वसन् उक्तवान् - ''तदर्थं तु विलम्बः जातः । मम द्वितीयः आशयस्तु मम कुटुम्बस्य उपयोगार्थं गुजरात्-राज्यस्य केचन प्रसिद्धाः अश्वाः आनेतव्याः इति'' इति ।

एतत् श्रुत्वा सर्वे निश्श्वसितवन्तः ।

'एतत् तु असाध्यम् !' इति बान्धवाः चिन्तितवन्तः ।

''यदि भवतः धीरः पुत्रः स्यात् तर्हि सः भवतः अपेक्षाः अपूरयिष्यत्'' इति खेदेन उक्तवान् कश्चित् बन्धुः । ततः ते सर्वे गृहं प्रतिगताः ।

लालरदा पितुः निकटम् आगत्य पितरं प्रीत्या आलिङ्ग्य अश्रूणि स्त्रावयन्ती उक्तवती - ''तात ! भवतः अपेक्षाद्वयम् अपि अहं पूरयिष्यामि'' इति ।

ठाकुरः तां तदेकदृष्ट्या दृष्टवान् । तस्याः नेत्रे दृढनिश्चयः दृश्यते स्म । ''पुत्रि ! भवत्याः निर्णयः मम महते सन्तोषाय अभवत् । देवः



भवतीं रक्षतु'' इति वदन् निमेषाभ्यन्तरे एव सः इहलोकं त्यक्तवान् ।

पितुः अपेक्षापूरणार्थं लालरदा गृहात् प्रस्थितवती । पुरुषवेषं धृतवती सा । स्वस्य दीर्घान् केशान् उष्णीषस्य अन्तः गोपितवती । दीर्घं खड्गं गृहीत्वा एकम् अश्वम् आरुह्य गुजरातराज्यं प्रति प्रयाणम् आरब्धवती सा ।

अश्वप्राप्तिनिमित्तम् एव प्रस्थितौ द्वौ युवकौ तया मार्गे दृष्टौ । तयोः एकः रजपूतयोधः, अन्यश्च नापितः । ते त्रयः स्नेहिताः अभवन् । ते मिलित्वा प्रयाणम् अनुवर्तितवन्तः ।

यत्र प्रसिद्धाः अश्वाः प्राप्यन्ते तत् नगरं प्राप्तवन्तः ते । तत्र अश्वाः भवने बद्धाः न आसन्, अपि तु क्षेत्रे स्वतन्त्रतया उन्मुक्ताः आसन् । तेषां रक्षणार्थं राज्ञा कश्चन सैनिक-

गणः नियोजितः आसीत् । तत्रत्यः राजा घोषितवान् आसीत् यत् ये अश्वान् नेतुम् इच्छन्ति ते अपेक्षितसङ्ख्याकान् अश्वान् नेतुम् अर्हन्ति, परन्तु नियमः एकः पालनीयः अस्ति । अश्वरक्षकान् सैनिकान् पराजित्य एव अश्वाः प्राप्तुं शक्याः इति ।

महतः क्षेत्रस्य एकस्मिन् कोणे महान् आनकः आसीत् । यः अश्वं प्राप्तुम् इच्छति तेन आनकः ताडनीयः । तदा सैनिकाः तत्र उपस्थिताः भवन्ति । स्पर्धाह्वानकारकः यदि पराजितः भवति तर्हि तेन रिक्तहस्ततया प्रतिगन्तव्यम् आसीत् । परन्तु यदि सः जयं प्राप्तवान् भवति तर्हि अपेक्षितसङ्ख्याकान् अश्वान् सः नेतुम् अर्हति । सैनिकाः तु नितरां बलशालिनः आसन् । महाशूरैः एव प्रायः ते पराजेतुं शक्याः ।

एतस्मात् कारणात् एव ठाकूरहरिसिङ्गस्य बान्धवाः गुजरातृतः गृहं प्रति अश्वानाम् आनयनविषये धैर्यं न दर्शितवन्तः आसन् ।



एते त्रयः अपि यदा अश्वानां क्षेत्रं प्राप्तवन्तः तदा लालरदा प्रथमम् आनकं ताडितवती सैनिकानाम् आह्वानार्थम् । ''इतः नयनार्थम् उत्तमानाम् अश्वानां चयनं किं कर्तुम् अर्हति भवान् ?'' इति योधं पृष्टवती लालरदा । सः अङ्गीकृतवान् ।

योधः नापितः च यदा अश्वचयनार्थम् उद्युक्तौ जातौ तदा लालरदा आनकताडनम् आरब्धवती । क्षणाभ्यन्तरे सैनिकानां गणः एव तत्र उपस्थितः । आनकं ताडयन्तम् एकाकिनं नवयुवकं दृष्ट्वा ते सर्वे आश्चर्यचकिताः । सैनिकनायकः सोपहासम् उक्तवान् - ''इतः निर्गच्छतु तावत् । सुसज्जेन सैन्येन सह एव वयं युद्धं करिष्यामः, न तु एकाकिना सह'' इति ।

निरातङ्का लालरदा - ''अहम् एकाकी एव सर्वान् पराजेतुं शक्नोमि । आगच्छन्तु तावत्'' इति वदन्ती स्वस्य शूलं हस्तेन गृहीतवती ।

सैन्यनायकः उपहसन् अवदत् - ''अहो ! यस्य एतस्य मुखे श्मश्रु इतोऽपि न दृश्यते सोऽयं पश्यतु, कथं सम्भाषते इति !'' इति ।

तदा लालरदा उत्तरितवती - ''मम सामर्थ्यविषये भवतः सन्देहः यदि वर्तते तर्हि पश्यतु एतत् शूलं भूमौ निक्षिपामि । यदि भवत्सु यःकोऽपि सैनिकः एतत् निष्कासयति तर्हि अहं पराजयम् अङ्गीकृत्य इतः निर्गमिष्यामि'' इति ।

ते एतस्य नवयुवकस्य विलक्षणं स्पर्धाह्वानं



# कलाकौशलम्

चित्रकर्मकला राजस्थानस्य पुरातनकलासु अन्यतमा । लघुकलाकृतिः राजस्थानस्य अत्यन्तं वैशिष्ट्यपूर्णा विमोहनयोग्या च अस्ति । भारते एव अत्यपूर्वः कलाप्रकारः एषः । स्ववैशिष्ट्यं रक्षन्तः बहवः कलाप्रकाराः अत्र सन्ति । मेवार, कोटा, जयपुर, बिकानेर, मार्वार इत्यादयः ये कलाप्रकाराः सन्ति तेषु एकैकोऽपि अन्यस्मात् भिन्नः । कोटाकलाप्रकारस्य विषयाः भवन्ति - अरण्यं नदी गिरिः मृगया इत्यादीनि दृश्यानि । श्रीकृष्णस्य जीवनघटनाः प्रायः अत्रत्येषु सर्वेषु कलाप्रकारेषु सामान्यतया दृश्यन्ते ।

राजस्थानम् आभूषणानां विषये अपि प्रसिद्धम् अस्ति । मुघलानां काले राजस्थानं सुवर्णाभूषणानां मुख्यं केन्द्रम् आसीत् । सुवर्णलेपनार्थमपि एतत् प्रसिद्धमस्ति । जयपुरं तत्रत्यानाम् अमूल्यार्धामूल्यशिलानां कृते काचकलेपनविषये बहु प्रसिद्धम् अस्ति ।

अद्यापि काचकलेपनं न केवलं सुवर्णस्य उपरि, अपि तु रजतस्य अन्यधातूनाम् उपरि चापि कुर्वन्ति अत्रत्याः ।

श्रुत्वा हसितवन्तः ।

लालरदा स्वशूलं बलात् भूमौ निखातवती । कश्चन सैनिकः अग्रे आगत्य तत् उन्नेतुं प्रयत्नम् अकरोत् । सुदृढं स्थितम् आसीत् तत् । अतः सः कथञ्चिदपि तत् कम्पयितुम् अपि न शक्तवान् ।

सः ततः प्रतिगतः । अन्यः सैनिकः अग्रे गतः । तदनन्तरम् अन्यः । परन्तु केनापि शूलं निष्कासयितुं न शक्तम् । नायकोऽपि प्रयत्नम् अकरोत् । परन्तु सोऽपि सफलः न जातः । ते सर्वे मौनेन तस्मात् क्षेत्रात् बहिर्गताः ।

लालरदा स्वशूलं बहिः स्वीकृतवती । स्वीकरणसमये अकस्मात् तस्याः उष्णीषः पतितः । केशाः बहिः दृष्टिगोचराः जाताः । सा कञ्चित् स्वरं श्रुत्वा परितः दृष्टवती । तत्र नापितः स्थितः आसीत् । ''भवती अस्ति महिला !'' इति आश्चर्येण सः उक्तवान् । लालरदा तीक्ष्णदृष्ट्या तं दृष्टवती, तावदेव ।

त्रयाणां कृते अश्वानां विभागं कुर्वन् स्थितः योधः एतत् श्रुत्वा मुखं परिवर्त्य दृष्टवान् । आत्मना सह आगतं मित्रं महिला इति ज्ञातवान् सः तस्य कारणं ज्ञातुम् इष्टवान् । लालरदा मुक्तरूपेण पूर्णकथां श्रावितवती ।

योधः तस्मात् प्रभावितः अभवत् । ''भवती साहसप्रिया धैर्यशालिनी महिला



अस्ति । पुरुषाः एव साहसप्रवृत्तिमन्तः महा-कार्यसाधकाः इति वदन्ति जनाः । परन्तु किं तत् सत्यम् ? भवत्या कृतं कार्यं केनापि कर्तुम् अशक्यम् आसीत्'' इति साभिनन्दनम् उक्तवान् सः ।

''परन्तु मम उद्यमः न समाप्तः । मम गृहे यथा तोदर्माल् श्रूयेत तथा करणीयम् अस्ति । तदर्थमेव मम एषः छद्मवेषः आवश्यकः अस्ति'' इति मन्दध्वनिना उक्तवती लालरदा ।

परन्तु योधेन तत् न श्रुतमेव । ''अहं यादृशीं परिणेतुम् इष्टवान् आसं तादृशी एव अस्ति भवती । किं मां परिणेष्यति भवती ?'' इति पृष्टवान् सः ।

लालरदा गम्भीरतया चिन्तितवती । 'पितुः अन्याम् अपेक्षां पूरयितुम् अत्र अस्ति कश्चन अवसरः' इति विचिन्त्य सा उक्तवती - ''अङ्गीक्रियते मया । परन्तु अस्मिन् विवाहे अहं वरः भविष्यामि । अहं भवतः गृहं प्रति वरयात्राम् आनेष्यामि । वधूरूपं धृतवन्तं भवन्तम् अहं नेष्यामि'' इति उक्तवती ।

योधः आश्चर्यचकितः जातः । 'कथं वा

# दुर्गाणि प्रासादाः च

राजस्थानं दुर्ग-प्रासादमयं राज्यम् अस्ति इति यदि वदामः तर्हि न तत्र अतिशयोक्तिः । अत्रत्यानि दुर्गाणि सामान्यतः शैलानाम् उपरि भवन्ति, न तु नदीनां तटे । अन्यदुर्गाणि परितः यथा तथा खाताः अत्र न दृश्यन्ते । एतस्मात् ज्ञायते यत् अत्रत्याः भुशुण्डयः बहुदूरं यावत् स्फोटकगोलकानि प्रेषयितुं समर्थानि आसन् इति । चित्तोडप्रदेशे गिरेः उपरि स्थितं दुर्गम् अत्यन्तं पुरातनम् इति प्रसिद्धम् । अन्यानि प्रसिद्धानि दुर्गाणि रणतम्भोर, जैसल्मेर, अम्बर, नहार्गर, बुन्दि, जोधपुर, बिकानेर इत्यादिषु प्रदेशेषु स्थितानि सन्ति ।

महाराजानां प्रदेशः एषः इति कारणतः अस्मिन् राज्ये सहजतया एव बहवः प्रासादाः दृश्यन्ते । जयपुरे विद्यमानः अम्बरप्रासादः राजपूतशिल्पशास्त्रस्य अनुपमम् उदाहरणम् अस्ति । उदयपुरस्य 'कासारीय'प्रासादः कृष्णशिलया निर्मिता अपूर्वकलाकृतिः वर्तते । एषः एव राजस्थानस्य विशालप्रासादः । जयपुरस्य 'नागर'प्रासादः जैसल्मेरप्रासादः च प्रसिद्धेषु प्रासादेषु अन्यतमौ ।

## दर्शनयोग्यानि स्थलानि



पाटलनगरम् इति प्रसिद्धं राजधानीनगरं जयपुरं प्रमुखं यात्रास्थलम् अस्ति । अत्र हवामहल्, जन्तरमन्तर च प्रेक्षणीयेषु अन्यतमे स्तः ।

अस्मिन् मरुभूमिमये राज्ये हरिद्वर्णयुक्तः शैलप्रदेशः एकः एव । सः अस्ति - मौण्ट् अबु । अत्रत्यं प्रमुखाकर्षणकेन्द्रम् अस्ति एषः । दिल्वाराजैनदेवालयः अपरं दर्शनयोग्यं स्थानम् । अत्रत्या शिल्पकला अत्यन्तं मनोहारिणी अस्ति । एतत् राजस्थानम् अनेकेषां प्राणिपक्षिणां वासस्थानम् अस्ति । भरतपुरस्य राष्ट्रियोद्यानं 'सुमहत् बकपालनकेन्द्रम्' इति प्रपञ्चे एव प्रसिद्धम् अस्ति । अत्रत्यं रणतम्भोरराष्ट्रियोद्यानं व्याघ्रपालनकेन्द्रम् अस्ति ।

अहं महिलावेषं धरेयम्, तदपि ममैव विवाह-दिने ! सर्वथा असाध्यम् एतत्' इति चिन्तयन् सः मौनेन आसीत् ।

तदा सः नापितः - ''अङ्गीकरोतु तावत् ।



मूर्खः मा भवतु, किञ्चित्समयं यावत् केवलं भवता स्त्रीवेषः धर्तव्यः । परन्तु यदि भवान् न अङ्गीकरोति तर्हि एतादृशी कन्या न मिलेत् एव'' इति उक्तवान् ।

बहु विचिन्त्य योधः एतं प्रस्तावम् अङ्गी-कृतवान् । नापितः सन्तोषेण तयोः विवाहार्थं सर्वाः सिद्धताः कृतवान् ।

विवाहदिने लालरदा वरस्य वेषं धृत्वा 'वध्वाः' गृहं प्रति 'वरयात्रां' नीतवती । 'वधू'रूपं धृतवान् वरः 'वर'रूपेण स्थितायाः वध्वाः गृहम् आगतः ।

लालरदायाः गृहस्य देहल्यां महिलाः स्थितवत्यः आसन् । ताः महता सन्तोषेण 'तोदर्माल्'गानम् आरब्धवत्यः वधूवरयोः स्वागतार्थम् । एवं लालरदा पितुः अपेक्षां पूरितवती ।

अतः एव अद्यापि रजपूतजनाः वदन्ति - 'योग्यपुत्र्याः प्राप्तिः अयोग्यपुत्रस्य प्राप्तितः अपि उत्तमतरा' इति ।

# भारतम् अवगम्यताम्

एतस्य मासस्य प्रश्नाः भारतीयानाम् अन्ताराष्ट्रियाणां च क्रीडानाम् आधारेण रचिताः । एतेषाम् उत्तरस्य अवगमनेन भवतां क्रीडाक्षेत्रीयं ज्ञानं परिष्कृतं भवेत् । अतः उत्तरं दातुं प्रयतन्ताम् ।

१. एशियाडक्रीडाः ऐदम्प्राथम्येन कदा कुत्र प्रवृत्ताः ?

२. नवमी एशियन्क्रीडामाला १९८२ तमे वर्षे देहलीनगरे या प्रवृत्ता तस्याः शुभफलं किम् ?

३. नवम्याम् एशियाड्स्पर्धायां २० कि.मी.चलनविभागे कः सुवर्णपदकं प्राप्तवान् ? कियता कालेन सः लक्ष्यं प्राप्तवान् ?

४. १९०८ तमवर्षानन्तरं भारतेन ओलम्पिक्स्पर्धायां हाकीक्रीडायां कतिवारं विजयः आसादितः ?

५. ओलम्पिक्स्पर्धासु का महिला अन्तिमस्तरं गतवती आसीत् ?

६. एशियन्स्पर्धासु सुवर्णपदकं प्राप्तवती प्रथमा महिला का ?

७. अधः त्रयाणां पारितोषिकाणां नामानि लिखितानि । तानि कस्याः क्रीडायाः सम्बन्धीनि ?
(अ) रानी झान्सी ट्रोफी (आ) सुब्रतो कप् (इ) मुत्तय्य कप्

८. भारतीयाः केचन प्रसिद्धाः क्रीडापटवः नामान्तरेण अपि ख्याताः सन्ति । अधोनिर्दिष्टान् अभिजानन्तु –
(अ) दि फ्लैयिग् सिक्ख् (आ) दि लिट्ल् मास्टर् (इ) दि विझार्ड्

९. इंग्लीषुकुल्यां तरणेन अतिक्रान्तवान् प्रथमः भारतीयः कः ? सः कदा तत् कृतवान् ? १९६० तमे वर्षे तेन अपरम् अपि साहसं कृतम् । किं तत् ?

१०. कः भारतीयः ऐदम्प्राथम्येन ब्याट्मिण्टन्क्षेत्रे विश्वविख्यातः जातः ? सः कस्मिन् वयसि 'न्याषनल् जूनियर् चाम्पियन्शिप्' प्राप्तवान् ?

११. अत्युन्नतः क्रिकेट्पथः भारते अस्ति । सः कुत्र अस्ति ?

*(उत्तराणि अग्रिमे मासे)*

### *'जनवरी'मासस्य प्रश्नानाम् उत्तराणि*

*१. १०,००० मेगाव्याट् ।*
*२. १९८३ तमे वर्षे ।*
*३. जर्मनीतः ।*
*४. पृथ्वी इति ।*
*५. राकेशशर्मा, ३- एप्रिल्, १९८४ । कल्पना चाव्ला ।*
*१९ अक्टोबर्, १९९७ ।*
*६. १९५७ तमे वर्षे ।*
*७. १९५३ तमे वर्षे ।*
*८. कोल्कतानगरे । १९५४ तमे वर्षे । 'न्यू सक्रेटरियेट्'भवनम् । (१४अट्टालकम्)*



# विघ्नेश्वरः

श्रीकृष्णस्य विस्मयान्वितं वदनं दृष्ट्वा रुक्मिणी हसन्ती उक्तवती – ''अद्य अहम् अत्यन्तम् आनन्देन अस्मि । सा कन्या आसक्त्या भवन्तं निरीक्षमाणा उपविष्टवती आसीत् । भवति तस्याः प्रीतिः असाधारणी दृष्टा मया । भवान् यथा समस्तसम्पत्तिं स्वस्य वशे रक्षितवान् अस्ति तथैव सा भवन्तं स्वस्य वशे स्थापयितुम् इच्छति'' इति ।

''किं भवती स्वस्य आशयं तां न उक्तवती एव ?'' इति कृष्णः पृष्टवान् ।

''अहं भवति अणुरूपेण जीवितुम् इच्छामि । अतः भवान् यस्याःकस्याश्चित् वशे भवति चेदपि न काचित् हानिः मम'' इति उक्तवती रुक्मिणी ।

''अहो, कस्यचित् महतः विचारस्य सूक्ष्म-व्याख्यानं भवती कथं कृतवती ! अतः एव अहं भवत्याः इच्छानुसारं भवतीम् अप-हृत्य आनीतवान्'' इति उक्तवान् श्रीकृष्णः ।

''मया यत् ज्ञातं तावन्मात्रम् एव अहं वदन्ती अस्मि । सत्यभामायाः प्रीतिः मम भावनातः अपि विशिष्टा । तस्याः प्रीतौ भीकरप्रकृतेः अनन्तशक्तिः अपि लीना अस्ति इति भाति । स्वामिन् ! मयि तु भक्तिभावना-मात्रं वर्तते'' इति रुक्मिणी यदा वदन्ती आसीत् तदा कृष्णः उक्तवान् – ''रुक्मिणि ! भवती दर्शनादिविषयं मा वदतु'' इति ।

कानिचन दिनानि अतीतानि । अत्रान्तरे 'श्रीकृष्णः स्यमन्तकमणेः अपहरणं कृतवान्' इत्येषा किंवदन्ती अग्निः इव चतुर्षु दिक्षु अपि प्रसृता । एतां वार्तां स्वयं सत्राजित् एव



सर्वत्र प्रसारितवान् आसीत्। मणिः नष्टः यत् तस्मात् सः उन्मत्तः इव जातः आसीत्।

कृष्णः चिन्तितवान् – 'एतस्य दोषारोपस्य विषये चिन्ताकरणेन किमपि प्रयोजनं नास्ति' इति। सः मनसि एव विघ्नेश्वरं ध्यायन् – ''हे विघ्नेश्वर ! एतत् सर्वं भवतः लीला। भवतः कृपा यथा अस्ति तथैव भविष्यति सर्वम् अपि'' इति स्वगतम् उक्तवान्। तस्य मणेः अन्वेषणार्थं सः अरण्यं प्रति गतवान् च।

स्वपुत्री सत्यभामा राज्ञे शतधन्वने दातव्या इति सत्राजित् निश्चितवान् आसीत्। अतः सः एतद्विषये शतधन्वना सह वार्तालापं कर्तुम् अन्तिमसहोदरं प्रसेनजितं प्रेषितवान् आसीत्। प्रसेनजित् स्यमन्तकमणिं धृत्वा यदा अरण्ये गच्छन् आसीत् तदा तं मणिं दृष्ट्वा आकृष्टः कश्चन सिंहः प्रसेनजितं मारितवान् आसीत्। जाम्बवान् तं सिंहं मारयित्वा स्वपुत्र्यै जाम्बवत्यै तं मणिं दत्तवान् आसीत्।

स्यमन्तकमणिं धृत्वा गतः प्रसेनजित् न प्रत्यागतः इत्यतः सत्राजित् नितरां चिन्ताक्रान्तः जातः। तं मणिं श्रीकृष्णः अपहृतवान् इति सः प्रचारम् आरब्धवान्। ये श्रीकृष्णस्य शत्रवः आसन् ते सर्वे सत्राजिते सूचनां प्रेषितवन्तः यत् वयं सर्वे श्रीकृष्णस्य संहारकार्ये साहाय्यं कर्तुम् उत्सुकाः स्मः इति।

स्यमन्तकमणेः अन्वेषणार्थं गतः श्रीकृष्णः एकत्र मृतं प्रसेनजितं सिंहं च दृष्टवान्। पार्श्वे एव जाम्बवतः पादचिह्नानि अपि तेन दृष्टानि। तान्येव अनुसृत्य गतः श्रीकृष्णः जाम्बवतः गुहां प्राप्तवान्।

तस्यां गुहायां नवयौवनशालिनी जाम्बवती स्यमन्तकमणेः सौन्दर्यम् आस्वदमाना आसीत्। जाम्बवती काचित् अनाथा राजकुमारी। यदा बालिका आसीत् तदा सा जाम्बवता अरण्ये प्राप्ता। तां जाम्बवान् पुत्रीम् इव महत्या प्रीत्या पालितवान् आसीत्।

मणेः स्वीकरणार्थं श्रीकृष्णः जाम्बवत्याः हस्तं यदा गृहीतवान् तदा सा लज्जया श्रीकृष्णस्य मुखं पश्यन्ती स्थितवती। तदा एव तत्र जाम्बवान् आगतवान्, श्रीकृष्णस्य उपरि आक्रमणं कृतवान् च। तयोः मध्ये द्वादश दिनानि महत् युद्धं प्राचलत्। श्रीकृष्णः जाम्बवतः वक्षःस्थले मुष्टिप्रहारं कृतवान्। तदा जाम्बवान् ज्ञातवान् यत् श्रीरामः एव श्रीकृष्णरूपेण अवतारं प्राप्तवान् अस्ति इति।

जाम्बवान् श्रीकृष्णं नमस्कृत्य उक्तवान् – ''हे कृष्ण। भवता जाम्बवत्याः पाणिग्रहणं कृतम् अस्ति। अतः सा भवदीया एव

भविष्यति'' इति । एवं वदन् सः जाम्बवतीं स्यमन्तकमणिं च श्रीकृष्णस्य हस्ते अर्पितवान् ।

तदनन्तरं श्रीकृष्णः जाम्बवत्या जाम्बवता च सह द्वारकानगरं प्रति गतवान् । स्यमन्तकमणिं सत्राजितः हस्ते दत्तवान् च । जाम्बवान् समग्रं वृत्तान्तं सत्राजितम् उक्तवान् ।

तदा सत्राजित् पश्चात्तापेन उक्तवान् - ''श्रीकृष्ण, यः सम्पदं नाशयति सः उच्यते पापी इति । भवतः मानं नाशितवान् अहं महापापी अस्मि । एतदर्थं भवान् यत् दण्डनं दातुम् इच्छति तत् ददातु । तत् अनुभोक्तुम् अहं सिद्धः अस्मि'' इति ।



तदा श्रीकृष्णः उक्तवान् - ''पश्चात्तापः एव युक्तं दण्डनम् अत्र'' इति ।

तदनन्तरं सत्राजित् कृतस्य अपराधस्य निमित्तं स्यमन्तकमणिं सत्यभामां च श्रीकृष्णस्य हस्ते दत्त्वा 'स्वीकरोतु' इति प्रार्थितवान् ।

श्रीकृष्णः तु सत्यभामामात्रं परिगृह्य स्यमन्तकमणिं प्रत्यर्पितवान् । तदा सत्यभामा मुखं परिवर्त्य पितरं दृष्टवती । तस्याः दृष्टिः कथयति स्म - 'तात ! मम मूल्यम् अधिकम् उत मणेः इति भवान् एव ज्ञातवान् खलु' इति ।

ततः सा पितरम् उद्दिश्य - ''भवान् एकदा विघ्नेश्वरस्य महिमानम् अजानन् यत्किमपि उक्तवान् । अहं सर्वदा विघ्नेश्वरस्य विषये श्रद्धावती अस्मि । अद्य मम आशयः पूर्णः जातः'' इति वदन्ती करौ योजयित्वा विघ्नेश्वरं भक्त्या नमस्कृतवती ।

तदा विघ्नेश्वरः स्वलीलास्वरूपं दर्शयन् - 'भगवान् सर्वदा परमसत्यस्य एव पक्षं वहति । सत्यम् एव तस्य सम्पत्' इत्येतम् आशयम् अभिव्यञ्जयन् इव अकथयत् - ''सत्यभामां वृत्वा श्रीकृष्णः सत्यापतिनाम्ना प्रसिद्धः भविष्यति'' इति । ततः सः श्रीकृष्ण-सत्यभामयोः उपरि पुष्पवृष्टिं कृतवान् ।

सत्राजित् भक्तिपूर्वकं विघ्नेश्वरं नमस्कृत्य - ''क्षम्यतां मे अपराधः'' इति प्रार्थितवान् ।

श्रीकृष्णः अपि विघ्नेश्वरं नमस्कृत्य - ''एतत्सर्वं भवतः लीला । भवतः कृपया एव अहं दोषारोपात् मुक्तः सन् स्यमन्तकमणेः अपि अधिकमूल्यवतीं सत्यभामां प्राप्तवान् अस्मि'' इति उक्तवान् ।

एतदनन्तरं विघ्नेश्वरः - ''ये स्यमन्तकमणेः कथां शृण्वन्ति ते दोषारोपात् सर्वदा रक्षिताः भवन्ति'' इति उक्त्वा ततः अन्तर्हितः जातः ।



श्रीकृष्णाय स्वपुत्रीं दातुं यः अवसरः प्राप्तः तदर्थं महान्तं सन्तोषम् अनुभवन् सत्राजित् श्रीकृष्णस्य चरणौ प्रक्षाल्य आदरपूर्वकं तं प्रासादस्य अन्तः नीतवान् । ततः श्रीकृष्ण-सत्यभामयोः विवाहः महता वैभवेन सम्पन्नः । श्रीकृष्णः जाम्बवतीम् अपि परिणीतवान् ।

ततः जाम्बवान् श्रीकृष्णम् उक्तवान् – ''हे कृष्ण ! भवान् यदा रामावतारी आसीत् तदा अहं भवता सह युद्धकरणेच्छां प्रकटितवान् आसम् । तदा मया उक्तम् आसीत् यत् भवन्तं जामातृरूपेण प्राप्नुवते जनकराजाय अहम् असूयामि इति । मम एते द्वे आशये अद्य पूर्णे जाते स्तः । अहं धन्योऽस्मि । जीवनात् मुक्तः अस्मि'' इति । अनन्तरं सः तपः कर्तुम् इच्छन् अरण्याभिमुखं गतवान् ।

केषाञ्चित् दिनानाम् अनन्तरं प्रतीकार-भावनया शतधन्वा सत्राजितं मारितवान्, स्यमन्तकमणिं स्वीकृत्य कृतवर्मणा अक्रूरेण च सह निर्गतवान् च । श्रीकृष्णः सत्यभामां सान्त्वयित्वा शतधन्वना सह युद्धं कृतवान्, तं मारितवान् च । तस्मिन् समये अक्रूरकृतवर्माणौ मणिं स्वीकृत्य पलायितवन्तौ आस्ताम् । तौ अन्विष्य गतः श्रीकृष्णः मणिम् आनीय सत्य-भामायै पितुः स्मृतिचिह्नरूपेण दत्तवान् । अनन्तरं सः मित्रविन्दा, कालिन्दी, भद्रा, नाग्नजिती, लक्षणा इत्येताः वृतवान् । अष्टभिः पत्नीभिः सह सुखं वैभवं च अनुभवन् सः प्रतिवर्षं भक्तिपूर्वकं विनायकपूजां करोति स्म ।

स्यमन्तकमणेः प्रभावेण सत्यभामायाः समग्रम् अन्तःपुरं सुवर्णेन समृद्धं जातम् । सत्यभामा तेन अमूल्यानि आभरणानि कारयित्वा कौशेयवस्त्रादिकमपि क्रीतवती । श्रीकृष्णस्य अष्टसु महिषीषु सा एका एव ऐश्वर्यशालिनी आसीत् । एतेन सत्यभामायाः मनसि अहङ्कारः प्रवृद्धः । सा एतस्याः अपारायाः सम्पत्तेः स्वामिनीमात्रं न, अपि तु श्रीकृष्णस्य प्रियतमा पत्नी अपि आसीत् ।

श्रीकृष्णस्य पत्नीषु जाम्बवती वीणावादने कृतपरिश्रमा आसीत् । यदा नारदमुनिः वीणां वादयन् आकाशमार्गेण गच्छन् आसीत् तदा तेन परिहासपूर्वकः अट्टहासध्वनिः श्रुतः ।

तस्मात् आश्चर्यचकितः सः चतसृषु दिक्षु दृष्टिं प्रसारयन् पृष्टवान् – ''कस्य हासध्वनिः एषः ?'' इति ।

''नारद ! भवता वीणावादने बहु ज्ञातव्यम् अस्ति । भवान् आत्मनः वीणावादन-पाण्डित्यम् एव परमश्रेष्ठं मन्यते । अतः हासः आगतः'' इति आकाशवाणी श्रुता ।

नारदः अचिन्तयत् - 'मया एषा विद्या कुत्र अध्येतव्या ?' इति । तावता विघ्नेश्वरः दर्शनं ददत् उक्तवान् - ''जाम्बवत्याः सकाशात् भवता तत् अध्येतव्यम् अस्ति'' इति ।

अनन्तरं नारदः श्रीकृष्णस्य अनुग्रहेण जाम्बवत्याः सकाशात् वीणावादनकौशलम् अधीत्य तत् आत्मगतं कृतवान् ।

अथ कदाचित् यदा श्रीकृष्णः रुक्मिण्याः अन्तःपुरे आसीत् तदा नारदः तत्र आगत्य श्रीकृष्णाय पारिजातपुष्पं दत्तवान् । कृष्णः तत् रुक्मिण्यै दत्तवान् । एतं विषयं ज्ञात्वा सत्यभामा नितरां क्रुद्धा जाता । श्रीकृष्णः एतत् ज्ञात्वा गरुडवाहनम् आरुह्य स्वर्गं गत्वा नन्दनवने स्थितं पारिजातवृक्षम् उत्पाट्य आनीय सत्यभामायाः अङ्गणे आरोपितवान् । तथापि सत्यभामायाः मनसि सन्देहः आसीत् एव यत् श्रीकृष्णस्य प्रेम मयि अधिकं न स्यात् इति । एतस्मात् तस्याः मनसि इच्छा उत्पन्ना यत् हस्तबन्धनपूर्वकं श्रीकृष्णः अन्तःपुरे एव स्थापनीयः इति ।

एकस्मिन् दिने नारदः सत्यभामायाः प्रासादं प्रविश्य उक्तवान् यत् एकं पुण्यव्रतं यदि भवती करिष्यति तर्हि श्रीकृष्णः भवत्याः वशवर्ती भविष्यति इति । एतस्य व्रतस्य नियमस्य अनुसारेण सत्यभामा श्रीकृष्णं नारदाय दानरूपेण दत्तवती । नारदः घोषितवान् यत् यः कोऽपि श्रीकृष्णस्य भारस्य अनुगुणं सुवर्णं दत्त्वा तं क्रेतुं शक्नोति इति ।

सत्यभामा स्वस्य सर्वाणि सुवर्णाभरणानि अपि तुलायां स्थापितवती । स्यमन्तकमणिम् अपि तत्र स्थापितवती । तथापि श्रीकृष्णः यत्र उपविष्टवान् आसीत् सः घटः अधः



एव स्थितः आसीत् । तदा सत्यभामा स्वस्य अहङ्कारं परित्यज्य रुक्मिण्याः समीपं गत्वा - 'श्रीकृष्णं प्राप्तुम् उपायं कृपया सूचयतु' इति प्रार्थितवती ।

तदा रुक्मिणी उक्तवती - ''भगिनि, श्रीकृष्णः अन्याभिः सम्पद्भिः प्राप्तुं न शक्यः । निर्मलभक्तिमात्रेण प्राप्तुं शक्यः सः । एतस्य निमित्तं भक्त्या स्थापितम् एकं तुलसीपत्रमपि पर्याप्तम्'' इति ।

एतावत् उक्त्वा रुक्मिणी सत्यभामायै तुलसीपत्रम् एकं दत्तवती । सत्यभामा तत् भक्त्या तुलायां स्थापितवती । तदा कृष्णस्य घटः उपरि आगतः । तदा नारदः तत् तुलसीदलं स्वीकृत्य गतवान् ।

एतस्याः घटनातः सत्यभामायाः ज्ञानोदयः अभवत् । ऐश्वर्यविषये तस्याः मोहः निर्गतः । श्रीकृष्णः एव सर्वस्वम् इति भावना तस्याः मनसि उत्पन्ना । श्रीकृष्णस्य सूचनानुसारं मणिद्वारा प्राप्तं समग्रं सुवर्णमपि सत्यभामा अर्थिभ्यः दत्तवती । पितृनाम्ना धर्मशालां संस्थाप्य तत्र यात्रिणां कृते भोजनादिव्यवस्थां कृतवती । तया स्थापिताः धर्मशालाः 'सत्राजितः धर्मशालाः' इत्येव प्रसिद्धाः जाताः ।

केषाञ्चन दिनानाम् अनन्तरं श्रीकृष्णबलरामयोः भगिन्याः सुभद्रायाः विवाहः वैभवेन सम्पन्नः । तदा सत्यभामा सुभद्रायै स्यमन्तकमणिम् उपायनरूपेण दत्तवती । एवं स्यमन्तकमणिः पाण्डवानां हस्तं गतः ।

स्यमन्तकमणिद्वारा यत् सुवर्णं प्राप्तं तत् युधिष्ठिरेण कृतस्य राजसूययागस्य निमित्तम् उपयुक्तम् अभवत् । अनन्तरं युधिष्ठिरः द्यूते पराजयं प्राप्य सहोदरान् द्रौपदीं राज्यं च पणीकृतवान् । तत्रापि तस्य पराजयः एव ।

पाण्डवैः अनुष्ठितस्य राजसूययागस्य यशः दृष्ट्वा युधिष्ठिरविषये दुर्योधनस्य मनसि ईर्ष्या उत्पन्ना । द्रौपदी कथञ्चित् पराजेतव्या इत्येषः कुविचारः तस्य मनसि उत्पन्नः । पाण्डवानां पुरोहितः धौम्यः अर्जुनम् उपदिष्टवान् यत् स्यमन्तकमणेः प्राप्तितः आरभ्य भवन्तः कष्टमेव अनुभवन्तः सन्ति, अतः दौर्भाग्यस्य कारणीभूतः सः मणिः त्यक्तव्यः इति । तदा अर्जुनः तं मणिं बाणाग्रे संस्थाप्य सर्वां शक्तिम् उपयुज्य भूमिं प्रति प्रेषितवान् । तदा मणिः भूमेः अन्तः विलीनः जातः ।





# उपकारी

रतनः शङ्करवरनामकस्य ग्रामस्य निवासी । सः विंशतिवर्षीयः आसीत् । तस्य बाल्ये तदीयौ मातापितरौ दिवं गतौ । अतः सः पितामह्या पालितः । पितामह्याः अतिप्रीतिः तम् अलसम् अकरोत् । कार्यं किमपि अकुर्वन् सः सर्वदा दिवास्वप्नं पश्यन् भवति स्म । 'कदाचित् भाग्यदेवता मम पुरतः प्रत्यक्षीभूय वरं दत्त्वा मां धनिकं करिष्यति' इति तस्य मनः सदा चिन्तयति स्म ।

पितामही ग्रामे द्वित्रेषु गृहेषु गृहकार्याणि करोति स्म । ततः प्राप्तेन धनेन गृहस्य निर्वहणं करोति स्म । एकदा सा अस्वस्था अभवत् । अतः सः रतनम् आहूय - ''मया कार्यं कर्तुं न शक्यते । भवान् अरण्यं गत्वा काष्ठानि सङ्गृह्य आनयतु । तस्य विक्रयणेन प्राप्तेन धनेन पञ्चषाणि दिनानि यापयाम'' इति उक्तवती ।

अनन्यगतिकः रतनः प्रतिवचनं किमपि अवदन् स्कन्धे परशुं स्थापयित्वा अरण्यं प्रति प्रस्थितः । काष्ठानि सङ्गृह्य यदा तेषां बन्धनाय सः निरतः आसीत् तदा वृक्षस्य अधः स्फुरन्ती काचित् लता तेन दृष्टा । 'एतां लतां छित्त्वा काष्ठैः सह गृहं नेष्यामि । एतां पितामह्यै दर्शयिष्यामि' इति चिन्तयित्वा सः तां लताम् अपि स्वीकृत्य गृहं प्रति प्रस्थितवान् ।

ग्राममार्गे कुत्रचित् काचित् महिला पतिता आसीत् । तस्याः समीपे कश्चित् पुमान् दुःखेन उपविष्टः आसीत् । तौ द्वौ अपि दृष्ट्वान् रतनः तं पुरुषं दुःखस्य कारणं पृष्टवान् ।

तदा सः पुरुषः अवदत् - ''मम नाम धनञ्जयः इति । अहं सुप्रसिद्धः कश्चन वैद्यः । मत्तः चिकित्सां प्राप्तुं बहवः आगच्छन्ति । एवम् आगताः दरिद्राः चेत् विना मूल्यं तेभ्यः

भामहः



चिकित्सां ददामि । यदि रोगिणः धनिकाः तर्हि तैः यावत् दीयते तावता अहं सन्तुष्टः भवामि । अतः अहं दीर्घकालं वृत्तिं कृत्वा अपि महाधनिकः न अभवम् ।

कदाचित् दूरतः आगतानां रुग्णानां मरणस्य सम्भावना अपि भवति स्म । उचिते समये योग्यायाः चिकित्सायाः अभावः एव तत्र कारणम् । एतत् सर्वं दृष्टवतः मम मनः दुःखितं भवति स्म । मम मनसि विचारः भवति स्म यत् प्रतिग्रामं यदि चिकित्सालयः भवेत् तर्हि अनेकेषां प्राणरक्षणं लाभः च भवेत् इति ।

अथ कदाचित् कश्चन संन्यासी मम ग्रामम् आगतवान् । मया कृतेन आदरपूर्वकेण सत्कारेण सन्तुष्टः सः संन्यासी – 'भवतः कापि इच्छा अस्ति चेत् वदतु । ताम् अहं पूरयिष्यामि' इति माम् उक्तवान् । तदा मनसि स्थितं विचारं वदन् अहम् – ''स्वामिन् ! सर्वेषु ग्रामेषु चिकित्सालयः भवति चेत् सर्वेऽपि रुग्णाः उचिते समये उचितां चिकित्सां प्राप्य रोगात् मुक्ताः भवितुं शक्नुवन्ति'' इति उक्तवान् ।

एतत् श्रुतवान् संन्यासी हसन् उक्तवान् – ''एतादृशचिकित्साकेन्द्राणां स्थापनं राज्ञा करणीयम् । यतः एतदर्थम् आवश्यकं धनं सामान्यैः जनैः दातुं न शक्यते'' इति ।

निमेषद्वयस्य अनन्तरं सः पुनरपि अवदत् – ''कश्चन उपायः भासते । इतः तृतीये दिने राज्ञः जन्मदिनाचरणं भविष्यति । तस्मिन् अवसरे प्रचाल्यमाने उत्सवे अमूल्यं रत्नं दातव्यं भवता । तादृशम् अमूल्यं रत्नं दातुं सामर्थ्यं न स्यात् भवतः । अतः मया कश्चन मन्त्रोपदेशः क्रियते । तेन भवान् पाषाणमपि रत्नं कर्तुं समर्थः भविष्यति । तत् रत्नं राज्ञे दत्त्वा आत्मना चिन्तितं विषयं राजानं निवेदयतु । तदा भवतः इच्छा पूर्णा भवेत्'' इति ।

अहं पत्न्या सह राजधानीं प्रति प्रस्थितः । मार्गे मम पत्नीम् एतां सर्पः अदशत् । तेन सा मरणावस्थाम् आपन्ना अस्ति'' इति ।

रतनः धनञ्जयस्य सर्वां कथां श्रुतवान् । तावति काले धनञ्जयस्य दृष्टिः रतनस्य हस्ते स्थितायाः शोभामयलतायाः उपरि पतिता ।

तां दृष्ट्वा आश्चर्यचकितः धनञ्जयः रतनं पृष्टवान् – ''एषा लता कुत्र लब्धा भवता ? अस्याः लतायाः उपयोगेन अहं मम पत्नीम् उज्जीवितां करोमि । एतां लतां मह्यं ददातु'' इति ।

''भवते एतां लतां ददामि चेत् मम को वा लाभः ?'' इति पृष्टवान् रतनः ।

''राज्ञे रत्नस्य समर्पणात् यावत् धनं प्राप्येत तस्य अर्धं भवते दास्यामि'' इति रतनम् उक्तवान् धनञ्जयः ।

रतनस्य मनसि चिन्तनम् आरब्धं यत् राज्ञा दीयमानं सर्वं धनं मदीयं भवेत् इति । अतः सः 'लतायाः दानात् पूर्वं पाषाणं प्रथमं रत्नं करोतु' इति अनुरोधपूर्वकम् उक्तवान् । निरुपायः धनञ्जयः तस्य वचनानुसारं कर्तुं सिद्धः जातः । रतनस्य पुरतः एव पाषाणः रत्नरूपं प्राप्य अशोभत । तदा रतनः स्वधीने स्थितां शोभमानां लतां धनञ्जयाय दत्त्वा तत् रत्नं स्वीकृतवान् ।



धनञ्जयः अनुक्षणं तां लतां जले निक्षिप्य क्षणद्वयस्य अनन्तरं जलतः तां निष्कास्य तत् जलं पत्नीं पायितवान् । तेन तदीया पत्नी स्वस्था जाता ।

स्वास्थ्यं सम्पादितवतीं पत्नीं दृष्ट्वा महता सन्तोषेण धनञ्जयः रतनम् अवदत् - ''परोपकारः करणीयः इति मम महती इच्छा । तदर्थं मया चिकित्साकेन्द्राणि निर्मातव्यानि सन्ति । अतः राजा भवते यावत् धनं दास्यति तस्य धनस्य अर्धभागः मह्यं समर्पणीयः भवता'' इति ।

'अवश्यं दास्यामि' इति वदन् रतनः ततः निर्गतः । धनञ्जयस्य पत्नी पूर्णतया स्वस्था जाता आसीत् । अतः धनञ्जयोऽपि राजधानीं प्रति प्रस्थितः तया सह । यतः 'राज्ञा रतनाय दीयमानस्य धनस्य अर्धभागं राजधान्याम् एव स्वीकरिष्यामि' इति तस्य मनसि विचारः उत्पन्नः अभवत् । अन्यः अपि विचारः तस्य मनसि आसीत् यत् यदि राज्ञः दर्शनमपि भवेत् तर्हि ग्रामेषु निर्मीयमाणानां चिकित्साकेन्द्राणां विषयम् अपि राजानं निवेदयितुं शक्नुयाम् इति ।

धनञ्जयेन यदा राजधानी प्राप्ता तदा तत्र महान् उत्सवः प्रचलन् आसीत् । दूरप्रदेशेभ्यः बहवः अतिथयः आगताः आसन् । राजानं आशीर्वचनैः तोषयितुं केचन संन्यासिनः अपि तत्र आगताः आसन् । तेषु 'सोऽपि संन्यासी आसीत्, यः पूर्वं धनञ्जयाय वरं दत्तवान् आसीत् ।

उत्सवे धनञ्जयरतनयोः मेलनं द्वित्रवारम् अभवत् । किन्तु रतनः धनञ्जयेन सह वार्तालापं न कृतवान् । रतनस्य अनेन व्यवहारेण धनञ्जयः ज्ञातवान् यत् एषः वञ्चकः एव इति ।

अतः सः तं संन्यासिनं प्रवृत्तं सर्वं विस्तरेण उक्तवान् ।

राज्ञः अभिनन्दनकार्यक्रमः आरब्धः । अनेके राजानः जन्मदिनोत्सवस्य शुभाशयान् उक्तवन्तः । आत्मना आनीतानि अमूल्यानि वस्तूनि एकैकशः दातुम् उद्युक्ताः अभवन् ते । रतनः अपि स्वेन आनीतं रत्नं तस्मै समर्पितवान् ।

किन्तु तेन दत्तं रत्नं राज्ञः हस्ते पाषाणः जातः आसीत् । अपि च राज्ञः हस्ततः स्खलन् सः पाषाणः तस्य पादे पतितः । तेन राज्ञः पादे व्रणः जातः, रक्तस्रावश्च आरब्धः । अनेन क्रुद्धः राजा आदिष्टवान् यत् एतं कारागृहे स्थापयन्तु इति ।

रतनः एतस्याः घटनातः भीतः सन् पार्श्वे एव उपविष्टं धनञ्जयं पश्यन् दृष्ट्या एव तं दयाभिक्षाम् अयाचत ।

मृदुहृदयः धनञ्जयः संन्यासिनं दृष्टवान् । संन्यासी पुरतः आगत्य रतनम् उक्तवान् - ''रतन ! शोभमाना लता भवता विना श्रमं प्राप्ता । तया लतया धनञ्जयस्य पत्नी उज्जीविता । भवान् तु ततः लाभं प्राप्तुम् इष्टवान् । धनस्य सम्पादनार्थमेव तत् रत्नं भवता स्वीकृतम् । तावदेव न, 'राज्ञा दीयमानं सर्वं धनं मया एव स्वीकरणीयम्, धनञ्जयाय किमपि न दातव्यम्' इत्यपि भवतः मनसि विचारः उत्पन्नः । अतः एव भवान् राज्ञा दीयमानस्य धनस्य अधिकारी भवितुम् अनर्हः सञ्जातः । अतः मया एव तत् रत्नं पाषाणीकृतम्'' इति ।

रतनः रुदन् संन्यासिनः पादे पतितः । अनन्तरक्षणे एव सः पाषाणः रत्नरूपेण परिणतः जातः । राजा तत् रत्नं स्वीकृत्य अतीव सन्तुष्टः सन् धनञ्जयम् आगमनकारणं पृष्टवान् । धनञ्जयस्य कथनेन राज्ञा ज्ञातं यत् राज्ये चिकित्साकेन्द्राणां व्यवस्था समीचीना नास्ति इति ।

सः सचिवम् आहूय आज्ञापितवान् - ''राज्ये सर्वेषु ग्रामेषु एकैकं चिकित्साकेन्द्रं निर्मितं भवेत्'' इति ।

तेषां सर्वेषां चिकित्साकेन्द्रणां पर्यवेक्षणदायित्वं धनञ्जयाय दत्तम् । यद्यपि रतनः लोभी एव, तथापि तस्य कारणतः प्रजानां हितमेव जातम् इत्यतः राज्ञा तस्मै अपि उद्योगः दत्तः ।





# वाणिज्यस्य दायित्वम्

कनकपुरनामके ग्रामे नारायणः नाम कश्चन वणिक् आसीत् । तस्य विषये महती श्रद्धा जनानाम् । सः जीवने प्रभूतं यशः धनं च सम्पादितवान् ।

कदाचित् तस्य मनसि अकस्मात् भावना उत्पन्ना यत् अहं वृद्धः अभवम् इति । अतः सः अचिन्तयत् – 'मम वाणिज्यं सर्वं पुत्रेभ्यः समर्पणीयम्' इति ।

सः स्वपुत्रान् त्रीन् अपि आहूय उक्तवान् – ''मम वाणिज्यस्य विभजनम् अहं नेच्छामि । भवत्सु योग्यतावान् कश्चित् एतं वाणिज्यभारं निर्वहेत् इति मम इच्छा । सामर्थ्यम् एव वाणिज्यस्य यशस्वितायाः मूलं रहस्यम् । अतः भवत्सु त्रिषु कस्य तादृशी अर्हता अस्ति इति ज्ञातुम् अहं लघुपरीक्षाम् एकां कर्तुम् इच्छामि । एतद्विषये भवताम् अभिप्रायः कः ?'' इति ।

त्रयः अपि उक्तवन्तः – ''भवान् यथा वदति तथा व्यवहरिष्यामः वयम् । भवतः वचनं शिरोधार्यम् अस्माकम्'' इति ।

ततः नारायणः स्वस्य कोशात् त्रीणि रूप्यकाणि निष्कास्य एकैकस्मै एकैकं दत्त्वा उक्तवान् – ''एतत् रूप्यकं स्वीकृत्य सूर्यास्तात् प्राक् समीचीनं कार्यं कृत्वा आगन्तव्यं भवद्भिः'' इति ।

विना वचनं ते त्रयः ततः प्रस्थिताः । त्रयः अपि पितुः विषये आदरवन्तः प्रीतिमन्तः च आसन् एव ।

सायं नारायणः विपणितः आगतः । गृहे त्रयः अपि पुत्राः तस्य निरीक्षणं कुर्वन्तः आसन् ।

सर्वप्रथमं नारायणः ज्येष्ठं पुत्रं सोमेश्वरं

पृष्टवान् - "मया दत्तेन रूप्यकेण कीदृशं कार्यं कृतवान् भवान् ?" इति ।

सोमेश्वरः सानन्दम् उक्तवान् - "राम-मन्दिरस्य पार्श्वे क्षुत्पीडिता काचन वृद्धा दृष्टा मया । तस्यै एतत् रूप्यकं दत्त्वा - 'अनेन रूप्यकेण खाद्यं किमपि स्वीकृत्य खादतु' इति ताम् अहम् उक्तवान् । क्षुधापीडितानां क्षुन्निवृत्तिः समीचीनं कार्यं खलु" इति ।

नारायणः हसन् द्वितीयं पुत्रं रामकुमारम् आहूय पृष्टवान् - "भवता किं कृतम् ? वदतु" इति ।

रामकुमारः सगर्वम् उक्तवान् - "अस्माकं वाणिज्यं इतोऽपि वर्धताम् इति अहं देवालये पूजां कारयित्वा तत् रूप्यकम् अर्चकाय दत्तवान्" इति ।

ततः नारायणः तृतीयं पुत्रं लक्ष्मणम् आहूय पृष्टवान् - "भवता तत् रूप्यकं कथं व्ययितम् इति वदतु" इति ।

तदा लक्ष्मणः हसन् उक्तवान् - "उपयोगं विना धनस्य व्ययीकरणं भवान् न इच्छति । मया रूप्यकं व्ययितं, समीचीनं कार्यमपि कृतम् । भवतः रूप्यकमपि अहं प्रत्यर्पयन् अस्मि" इति ।

नारायणः तस्य वचनस्य अभिप्रायं न ज्ञातवान् । तदा लक्ष्मणः अवदत् - "तात । भवता दत्तेन रूप्यकेण मया त्रीणि कूष्माण्डानि क्रीतानि । विपण्यां कस्यचन आपणस्य पुरतः उपविश्य तानि त्रीणि अपि कूष्माण्डानि मया विक्रीतानि । केनचित् रूप्यकद्वयं दत्त्वा तानि क्रीतानि । एतस्मात् विक्रयणात् मम एकस्य रूप्यकस्य लाभः अभवत् । अहं रूप्यकार्धेन चणकं क्रीत्वा बुभुक्षितेभ्यः बालेभ्यः वितीर्णवान् । अन्यत् रूप्यकार्धं मन्दिरे देवाय समर्पितं मया । भवता एकं रूप्यकं दत्तम् आसीत् खलु ? तत् इदानीं मया प्रत्यर्पितम्" इति ।

पुत्रस्य दीर्घदृष्टिः, बुद्धिमत्ता, दयापरता इत्यादिकं सर्वं दृष्ट्वा नारायणः आश्चर्यचकितः, सन्तुष्टः च ।

सः लक्ष्मणाय एव वाणिज्यस्य समग्रं दायित्वं समर्पितवान् । एतस्मात् तस्य शेषजीवनं निश्चिन्तं जातम् ।





# बुद्धिमत्तायाः प्रेषणम्

चित्रपुरं किञ्चन लघुराज्यम् । तस्य राजा चित्रवर्मा । सः अनतिचिरात् सिंहासनम् आरूढः । अतः राजनीतिविषये तस्य अनुभवः न्यूनः । तथापि बुद्धिमतां सचिवानां सहकारः अस्तीत्यतः राज्यभारक्लेशः तं न बाधते स्म आधिक्येन ।

अङ्गराज्यं चित्रपुरस्य पार्श्वस्थं राज्यम् । चित्रपुरतः अपि बृहत् तत् । तत्रत्यः राजा वर्धनः । बहुभ्यः वर्षेभ्यः तस्य मनसि इच्छा आसीत् यत् चित्रपुरराज्यं वशीकरणीयम् इति । यदा अननुभवी चित्रवर्मा राजा जातः तदा वर्धनः अचिन्तयत् - 'चित्रपुरं स्वाधीनीकर्तुम् एषः सुसमयः । यतः अननुभवी चित्रवर्मा इदानीं तत्र राजा अस्ति । राजनीतेः कूटयुक्तयः तेन न ज्ञायन्ते' इति ।

वर्धनः कदाचित् सर्वान् सचिवान् आहूय तेषां पुरतः स्वाभिप्रायम् उक्त्वा - ''एतद्विषये भवताम् अभिप्रायः कः ?'' इति पृष्टवान् ।

राज्ञः विचारेण सन्तुष्टाः ते अवदन् - ''भवतः चिन्तनं समीचीनमेव । एतादृश्यां परिस्थितौ चित्रपुरस्य स्वाधीनीकरणे नास्ति क्लेशः । किन्तु एतादृशकार्ये कदापि त्वरा न करणीया । शत्रोः सैन्यबलं कियत्, तदीयं सामर्थ्यं च किम्, तस्य बुद्धिशक्तिः कीदृशी इत्यादिकम् अज्ञात्वा कदापि आक्रमणं न करणीयम् । तस्य अधिकारिजनानां बुद्धिकौशलस्य परीक्षा आदौ करणीया'' इति ।

तदा वर्धनः उक्तवान् - ''भवतां निर्णयः एव अन्तिमः । यया परीक्षया चित्रपुरस्य अधिकारिणां बुद्धिमत्ता कौशलं च ज्ञायेत तां परीक्षां कर्तुम् अर्हन्ति भवन्तः'' इति ।

ततः सर्वे मिलित्वा एकां योजनां कृतवन्तः । तदनुगुणं एकं पत्रं विलिख्य ते राजानम् अवदन् - ''प्रभो ! एतत् पत्रं चित्रवर्मणः आस्थानं प्रति प्रेषयतु । एतस्य पत्रस्य ते किम् उत्तरं प्रेषयन्ति इति दृष्ट्वा अग्रिमनिर्णयः स्वीक्रियते अस्माभिः'' इति । तस्मिन् पत्रे लिखितम् आसीत् यत् भवन्तः भवद्राज्यस्य



बुद्धिमत्तां प्रेषयन्तु इति ।

अङ्गराज्यस्य दूतः कश्चित् आगत्य चित्रवर्मणे एतत् पत्रम् दत्तवान् । तस्मिन् पत्रे लिखितं विषयं पठित्वा आश्चर्यचकितः राजा मन्त्रिभ्यः तत् पत्रं प्रदर्शितवान् । तेऽपि तत् पठित्वा विस्मिताः जाताः । 'वस्तूनां प्रेषणं तु शक्यते । किन्तु बुद्धिमत्तायाः प्रेषणं कथं शक्यम् ? एतादृशं कथनमेव हासजनकम्' इति ते सर्वे चिन्तितवन्तः ।

पत्रे स्थितं रहस्यं सचिवैः न ज्ञातम् इति ज्ञातवतः राज्ञः चित्रवर्मणः मुखं विच्छायम् अभवत् । तदा वयसा कनिष्ठः बृहस्पतिः नाम सचिवः उत्थाय अवदत् -''महाप्रभो ! अस्य पत्रस्य उत्तरं दातुं चतुर्मासात्मकः समयः आवश्यकः । तदनन्तरम् अहं राज्ञः वर्धनस्य इच्छानुगुणं बुद्धिमत्तायाः प्रेषणस्य व्यवस्थां कर्तुं शक्नोमि । किन्तु कश्चन नियमः अस्ति यत् चतुर्मासपर्यन्तं भवता अस्मिन् विषये कोऽपि प्रश्नः न करणीयः'' इति ।

चित्रवर्मणा एतत् अङ्गीकृत्य वर्धनराजं प्रति एकं पत्रं प्रेषितम् - ''भवदिच्छानुसारं बुद्धिमत्ता प्रेषयिष्यते । किन्तु एतदर्थं चत्वारः मासाः अपेक्षिताः'' इति ।

चत्वारः मासाः समाप्तप्रायाः । कदाचित् बृहस्पतिः एकेन महास्यूतेन सह राजसमीपम् आगतवान् । तदा तत्र सर्वे मन्त्रिणः आसन् । बृहस्पतिः हस्ते स्थितं स्यूतं दर्शयन् राजानम् अवदत् - ''प्रभो ! वर्धनेन इष्टा बुद्धिमत्ता अस्मिन् स्यूते अस्ति । एतं स्यूतं वर्धनराजं प्रति प्रेषयतु । किन्तु अस्य प्रेषणसमये महती जागरूकता आश्रयणीया । स्यूतस्य किञ्चिदपि आघातः न भवेत्'' इति ।

महता प्रयासेन स्यूतस्य बन्धनं कृतम् आसीत् । केनापि तस्मिन् स्यूते किम् अस्ति इति ऊहितुम् अपि अशक्यम् आसीत् । चित्रवर्मणा कोऽपि प्रश्नः न कृतः । तं स्यूतं वर्धनराजाय प्रेषितवान् सः ।

वर्धनः तं स्यूतं महत्या जागरूकतया उद्घाटितवान् । तत्र कश्चन मृदः घटः आसीत् । तस्य उपरि एकं लघु आवरणम् । अन्तः एकं महत् कूष्माण्डम् । घटे किञ्चिदपि स्थलं न आसीत् । केवलः वृन्तः बहिः दृश्यते स्म । घटः कुत्रापि न भ्रष्टः । एतत् दृष्ट्वा वर्धनराजः, तस्य मन्त्रिणः च आश्चर्यचकिताः अभवन् ।

घटस्य कण्ठे एकं पत्रं बद्धम् आसीत् । महता कुतूहलेन राज्ञा तत् पत्रम् उद्घाटितम् ।

तस्मिन् पत्रे लिखितम् आसीत् – ''राज्ञः वर्धनस्य अपेक्षानुगुणं बुद्धिमत्ता प्रेषिता अस्ति । अस्मिन् घटे बुद्धिमत्ता अस्ति । भ्रंशनं विना घटात् कूष्माण्डं बहिः आनेतव्यम् । अस्य प्राप्तेः समनन्तरं वार्ता प्रेषणीया'' इति ।

सभायाम् उपस्थिताः सर्वे परस्परं मुखं दृष्टवन्तः । केनापि एतत् न ज्ञातं यत् एतादृशं महत् कूष्माण्डं लघुमुखे घटे कथं प्रवेशितम् इति । 'भ्रंशनं विना कूष्माण्डस्य निष्कासनं कुर्वन्तु' इति यत् सूचितम् आसीत् तत् कथम् इति केनापि न ज्ञातम् । एवं करणं कदापि न शक्यम् इति विचिन्त्य सर्वे मौनं शरणं गत-वन्तः । तदा राजा वर्धनः मन्त्रिणः उद्दिश्य– ''ते बुद्धिहीनाः इति अस्माभिः चिन्तितम् । किन्तु ते अस्मत्तः अपि अधिकबुद्धिमन्तः इति एषा घटना प्रमाणीकरोति । पूर्वमेव अस्माभिः युद्धं न घोषितं यत् तत् युक्तम् एव जातम् । तैः सह स्नेहभावः एव उचितः'' इति उक्त्वा एकं पत्रं चित्रवर्मणे प्रेषितवान् – ''भवता प्रेषितः उपहारः प्राप्तः । भवन्तः अभिनन्दनयोग्याः । भवतः स्नेहः यदि प्राप्येत तर्हि अहम् अनुगृहीतः स्याम् । भवतः प्रत्युत्तरं प्रतीक्षमाणः अस्मि'' इति ।

अनेन चित्रवर्मा सन्तुष्टः । किन्तु तेन एतावता अपि न ज्ञातं यत् बृहस्पतिना कथं बुद्धिमत्ता प्रेषिता इति । अतः सः बृहस्पतिम् आहूय हार्दं धन्यवादं समर्प्य उक्तवान् – ''मन्त्रिवर्य ! भवतः एतेन कार्येण मया महद् गौरवं सम्पादितम् । किन्तु भवता कीदृशः उपायः कृतः इति तु न ज्ञातम्'' इति ।

तदा बृहस्पतिः उक्तवान् – ''मया किमपि तादृशं महत् कार्यं न कृतम् । चतुर्भ्यः मासेभ्यः पूर्वम् एका कूष्माण्डलता आरोपिता । केषुचित् दिनेषु तस्यां फलोत्पत्तिः जाता । अहं लघुमुखस्य घटस्य अन्तः लतास्थम् एकं लघुफलं स्थापितवान्, अवधानपूर्वकं तस्य रक्षणं कृतवान् च । यदा फलं समग्रे घटे अभिव्याप्तं जातं तदा तत् लतातः पृथक् कृत्वा स्यूते पूरयित्वा वर्धनराज्ञे प्रेषणं कारितम् । तेन सह एकं पत्रम् अपि प्रेषितम् आसीत् मया – 'घटे बुद्धिमत्ता अस्ति । घटस्य भङ्गम् अकृत्वा घटस्थं बहिः आनेतव्यं भवद्भिः' इति । एतस्य उत्तरं कीदृशं प्राप्तम् इति भवान् जानाति एव'' इति ।



Chandamama presents

# अजेयः गरुडः

चित्रं – पाणिः

राजा नरेन्द्रदेवस्य तत्पुत्रस्य रवीन्द्रदेवस्य च देशद्रोहिताम् उद्घोषयति । तौ सर्पदेशं प्रति गतौ स्तः इति तर्कयति । अतः आदित्यः तत्र गच्छति । आदिवासिनौ दम्पती तत्समीपम् आनीयेते । तरुणी वनवासिनां प्रमुखस्य पुत्री । तस्याः प्रियकरस्य नाम आदित्यः इति । नागबन्धुः बलिरूपेण अर्पणाय तस्य अन्वेषणं करोति । गुप्तमार्गेण गच्छन्तौ तौ गृहीतौ भवतः । आदित्यः वदति यत् नागबन्धुः मम अन्वेषणे उद्युक्तः अस्ति, न तु भवतः इति ।

सर्वं श्रुत्वा आदिवासिनौ दम्पती आश्चर्यचकितौ जातौ । तरुणी वदति – 'तान्त्रिकः अलौकिकशक्तीः वशीकृतवान् अस्ति । नरेन्द्रदेवस्य सहचारिणां मुखात् तान्त्रिकः भवतः साहसकृत्यादिकं ज्ञातवान् अस्ति । अतः जागरूकतया पदस्थापनं वरम्' इति ।

नरेन्द्रदेवः तत्पुत्रः च तान्त्रिकस्य अतिथी स्तः । सेनाधिपतिः नरेन्द्रदेवः तत्सहचराः च भवन्तं ग्रहीतुं निर्गच्छन्तः सन्ति ।

नरेन्द्रदेवः ! कुत्रास्ति सः ? वदतु अविलम्बेन ।



अद्य रात्रौ ते निर्गमिष्यन्ति इति मया श्रुतम् ।
पर्वतमूले ते नौकाम् आरुह्य नदीं तीर्त्वा अपरं तीरं प्राप्स्यन्ति ।
मदीयाः जनाः पर्वतमूले तेषां प्रतीक्षां कुर्वन्ति चेत् वरम् ।




आदित्यः स्वस्य शिबिरे तिष्ठन् रणनीतिं निश्चिनोति ।
आदिवासिनौ दम्पती मदनुचराणां कृते मार्गदर्शकौ भवितुम् अर्हतः ।
तैः शीघ्रातिशीघ्रं गन्तुं गुप्तमार्गः अवलम्बनीयः स्यात् ।
कः तत्र ?




अहं भवतां साहाय्याय आगतः अस्मि । बलिक्रिया अद्य समाप्ता
नागबन्ध्योः समीपं गन्तुं भवद्भिः अस्माकं साहाय्यं करणीयम् ।
वयं भवतः सर्वान् तत् मन्दिरं नयामः, यत्र च बलिक्रिया प्रचलति ।
आदित्यः कैश्चित् आदिवासिभिः मिलति । ते तान्त्रिकाय क्रुद्धाः सन्ति ।


आदिवासिनः आनन्दनिर्भराः सन्ति ।
भवन्तु केचन इतः गत्वा अग्निकुण्डम् उद्दीपयन्तु तं परितः नृत्यन्तु च । तदा तान्त्रिकः बहिः आगच्छति प्रायः ।
एषः अस्माकं रक्षकः ।


नरेन्द्रदेवः स्वस्य अनुयायिभिः सह प्रस्थानाय सन्नद्धः अस्ति ।
प्रस्थानात् पूर्वं मया तान्त्रिकबन्धुना सह मेलनीयम् । चन्द्रपुरीं प्रति सः निमन्त्रणीयः मया ।
किन्तु नरेन्द्रदेवेन निराशता प्राप्ता ।
आर्यः विश्रान्तिस्थितौ अस्ति । विश्रान्तिभङ्गः न युज्यते । अलं चिन्तया । चन्द्रपुरीं तम् अहम् आनेष्यामि ।


सः शापग्रस्तः गरुडः कुत्र गतः स्यात् ?
वनवासिनां प्रमुखः स्वयं नरेन्द्रदेवस्य मार्गस्य रक्षणभारं वहति स्म ।
इदानीं कुत्र स्मः वयम् ?
पर्वतमूलं प्रति गमनाय एषः निकटतरः मार्गः । अचिरात् एव वयं तत् स्थलं प्राप्स्यामः ।


आदित्यः स्वस्य कांश्चन अनुयायिनः आदिवासिभ्यां दम्पतिभ्यां सह प्रेषयति । तौ दम्पती मार्गं दर्शयतः ।


गुहायाः बहिः गीतनृत्यादीनां कारणतः यः कोलाहलः श्रूयते तस्मात् नागबन्धोः ध्यानस्य भङ्गः भवति ।
अग्निकुण्डे अग्निः उद्दीप्तः अस्ति । यदा आदित्यः बलिरूपेण अर्प्यते तदा एते नितरां सन्तुष्टाः भवेयुः ।


नरेन्द्रदेवम् आदिवासिप्रमुखं च नेतुम् एका सुसज्जा नौका तीरे उपस्थिता अस्ति । यदा नौकाचालनम् आरब्धं तदा..
नद्यां मकराः स्युः ! सावधानाः भवन्तु !
अनुवर्तते

# कालोऽयं मनोविनोदस्य

## मूलायाः विलापः

सर्वप्रिया तर्णकरूपा मूला मार्गभ्रष्टा अस्ति । तस्याः माता बद्धा अस्ति सुदूरे । अतः वत्सायाः समीपं गन्तुं न शक्नोति सा । मातुः समीपं गमनाय किं भवन्तः मूलायाः साहाय्यं कुर्युः ? स्मरन्तु, सा दण्डहस्तस्य ताडनोत्सुकस्य गोपालस्य समीपं नीता न भवेत् कथमपि ।



## सन्तुष्टः मर्कटेशः

एतस्मिन् चित्रे मर्कटेशः अनुजेन सह क्रीडन् सन्तोषसागरे निमग्नः अस्ति । विविधवर्णानां संयोजनेन एतस्य चित्रस्य उज्ज्वलतां वर्धयन्तु भवन्तः ।

*(उत्तराणि अन्तिमे पृष्ठे)*

## उष्ट्रस्यान्तः जीविनः

दीर्घप्रयाणस्य अनन्तरं विश्रान्तिस्तिथौ स्थितः इव दृश्यते खलु कश्चन उष्ट्रः चित्रे ? किन्तु तस्य अन्तः सन्ति अन्ये अपि जीविनः । तत्र स्थितान् जीविनः किम् अभिज्ञातुं शक्नुयुः भवन्तः ?






# चित्रशीर्षिकास्पर्धा





उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां
किं भवन्तः प्रेषयितुं शक्नुयुः ?

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृतशीर्षिका



निर्जीवेऽपि भोजनचिन्ता ।
सौहार्दभावो वन्येऽपि ।

## अभिनन्दनानि

**'डिसेम्बर्'मासस्य चित्रशीर्षिकाप्रेषकः -**
**सनत्कुमार उपाध्यायः**
*श्री शङ्कराचार्यसंस्कृतमहाविद्यालयः, द्वारका,*
*जामनगर(सौराष्ट्र) - ३६१ ३३५*

**उत्तरं मनोविनोदस्य (पृ - ६४)**



*मूलायाः*
*विलापः*



उष्ट्रस्यान्तः
जीविनः

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

